१४४। मेघमुखनामान्तरद्वीपः। प्रज्ञा० ५०।

मेहमुहदीव-अन्तरद्वीपविशेषः। ठाणा० २२६।

मेहरह-शान्तिनाथजिनस्य पूर्वभवनाम। सम० १५१। मेघरथः-मध्यमिकनगर्याधिपतिः। विपा० ९५।

मेहराति-मेघरात्रिः कालमेघरेखातुल्यत्वात्। भग०२७१। कृष्णरात्रेर्द्वितीयं नाम। ठाणा० ४३२।

मेहला-मेखला-कट्याभरणम्। प्रश्न० १५९। मेखला-रसना। ज्ञाता० १६५।

मेहवई-मेघवती-द्वितीयादिक्कुमारीमहत्तरिका। जं० प्र० ३८८।

मेहवन्न-मणिदत्तयक्षायतनस्यानोद्यानम्। निरय० ४०।

मेहसिरि-मेघगाथापतिपत्नी। ज्ञाता० २५१।

मेहस्सर-मेघस्वरः-मेघस्येवातिदीर्घः स्वरो यस्य सः। जीवा० २०७।

मेहा-मेधा-पाठशक्तिः। विशे० ९३०। मेधा-अपूर्वापूर्वं-बृंहणोहात्मको ज्ञानविशेषः। व्य० प्र० १४४ आ। आमलकल्पानगर्यां मेघगाथापतिपुत्री। ज्ञाता० २५१। मेधा-पटुत्वम्। आव० ७८७। मेधा-हेयोपादेया धीः। जं० प्र० १८२। चमरेन्द्रस्य पञ्चम्याऽग्रमहिषी। भग० ५०३। मेधा-इहावधारणस्वरूपा। विशे० ८५२। धर्मकथायाः प्रथमवर्गे पञ्चममध्ययनं। ज्ञाता० २४७। मेधा-वस्तुरूपावधारणशक्तिः। उत्त० २८७। मेधा-प्रथमं विशेषसामान्यार्थाविग्रहमतिरिच्योत्तरः सर्वोऽपि विशेष-सामान्यार्थावग्रहः। नंदी० १७५। मेधा-श्रुतग्रहण-शक्तिः। ठाणा० ४१६। मेघः-पयोदः। ठाणा० २७०।

मेहावि-मेधावि-स्वामिपदसंज्ञादिप्राप्तार्थधारकम्। जं० प्र० २३७। मेधावि। उपा० ४६।

मेहावी-मेधावी-कुशलः। आचा० ३९। मेधावी-मर्यादाव्यवस्थितः। आचा० ४९। मेधावी-प्लविनोत्प्ल-वनयोरुपायज्ञः। सूत्र० २७३। सकृच्छ्रुतदृष्टकर्मज्ञः। भग० ६३१। मेधावी-सर्वज्ञाज्ञः। आचा० ३०५। मेधावी-सकृच्छ्रुतदृष्टकर्मज्ञः। अनु० १७७। मेधावी-अपूर्वविज्ञानग्रहणशक्तिकः। ओप० ६५। मेधावी-परस्पराव्याहतपूर्वापरानुसन्धानदक्षः। जीवा० १२२। मेधावी-सकृच्छ्रुतदृष्टकर्मज्ञः। जं० प्र० ३८८। मेधावी-अपूर्वश्रुतदृष्टग्रहणशक्तियुतः। प्रश्न० ११६। मेधावी-मर्यादया धावतीत्येवंशीलमिति निरुक्तिवशात् श्रुत-ग्रहणशक्तिस्तद्वत्। ठाणा० ३५३। मेधावी-मर्यादावर्त्ति। ठाणा० ४१६। मेधावी-विदितासारसंसारस्वभावः। आचा० १११। मेधावी-बुद्धिमान्। आचा० १४७। मेधावी-तत्त्वदर्शी। आचा० १६२। मेधावी-अप्रमत्त-यतिः मर्यादाव्यवस्थितः श्रेण्यर्हो नापर इति। आचा० १७३। मेधावी-न्यायावस्थितः। आव० ५१६। मेधावी-मर्यादाव्यवस्थितः, सश्रुतिको हेयोपादेयपरिहार-प्रवृत्तिज्ञः। आचा० २०९। मेधावी-अर्थावधारण-शक्तिमान्, मर्यादावर्त्ती वा। उत्त० ६५। मेधावी-अवधारणशक्तिमान्। उत्त० १०४। मेधावी-साधुः। दश० १७८।

मेहिल-स्थविरविशेषः। भग० १३८।

मेहुण-मैथुनं-मिथुनस्य कर्म, द्वितीयमब्रह्मनाम। प्रश्न० ६६। मैथुनः-मातुलपुत्रः। बृ० द्वि० ९० आ। मिथुनं-स्त्रीपुंसयुग्मं तत्कर्म मैथुनम्। ठाणा० १८६। चतुर्थं पापस्थानकम्। ज्ञाता० ७५। मैथुनं-अब्रह्म। आचा० ३३१।

मेहुणपच्चय-मैथुनप्रत्ययं-मैथुननिमित्तम्। जीवा० ३८५।

मेहुणपडितातै-मैथुनप्रतिज्ञया-मैथुनार्थमिति। ठाणा० ३१५।

मेहुणवत्तिए-मैथुनस्य वृत्तिः-प्रवृत्तिर्यस्मिन्नसौ मैथुन-वृत्तिको मैथुनं वा प्रत्ययो-हेतुर्यस्मिन्नसौ मैथुनप्रत्ययिकः। भग० १३४।

मेहुणसंसग्ग-मैथुनसंसर्गः-मैथुनसम्बन्धं योषिदालापादि। दश० १९८।

मेहुणसण्णा-मैथुनसञ्ज्ञा-मैथुनाभिलाषः, वेदमोहोदयजो जीवपरिणामः। आव० ५८०।

मेहुणसन्ना-मैथुनसञ्ज्ञा-वेदोदयजनिता मैथुनाभिलाषः। जीवा० १५। मैथुनसञ्ज्ञा-पुंवेदोदयान्मैथुनाय स्त्र्यालो-कनप्रसन्नवदनसंस्तम्भितोरुवेपनप्रभृतिलक्षणक्रिया मैथुन-संज्ञा। प्रज्ञा० २२२। पुंवेदाद्युदयान्मैथुनाय स्त्र्याद्य-ङ्गालोकनप्रसन्नवदनसंस्तम्भितोरुवेपथुप्रभृतिलक्षणा क्रियैव सञ्ज्ञायतेऽनयेति मैथुनसञ्ज्ञा। भग० ३१४।

मेहुणा-मैथुनिका-मैथुनाजीवया । व्य० प्र० २०६ अ ।
मेहुणी-मैथुनिका-मातुलदुहिता । बृ० तृ० ७२ अ ।
मेहे-मेहः सेचनम् । सूत्र० ११८ ।
मैत्री-क्षमाया ग्रहणं ग्रहणं हितचिंता वैराभावश्च । तत्त्वा० ७-६ ।
मैथुनकम्मी-मैथुनकर्म प्रारभन्ते । व्य० द्वि० १६३ आ ।
मैथुनमतिक्रमादिना- । (?) ।
मैथुनासेवना-अभिगमगमनम् । आव० ८२५ ।
मोंढ-म्लेच्छविशेषः । प्रज्ञा० ५५ ।
मोंढरि-वल्लीविशेषः । भग० ८०४ ।
मो-अवधारणार्थे । सूत्र० १५४ । स्मो-भवामो । भग० ६६८ । अस्माकम् । उत्त० ३१० । मो-अयं निपातो वाक्यालंकारार्थः । दश० ७८ ।
मोउद्देसए-तृतीयशतकस्य प्रथमोद्देशकः । भग० ५०६ ।
मोउयो-रागदोसविरहितो दोण्हवि मज्झे वट्टमाणो तुला स मोउयो भण्णति । नि० चू० द्वि० १३६ अ ।
मोएज्जए-वरुणस्य पुत्रस्थानीयो देवः । भग० १९९ ।
मोएति-मोचयति । आव० ३५१ ।
मोक्कलं- । नि० चू० प्र० १६१ अ ।
मोक्ख-बन्धस्य वियोगो मोक्षः । बद्धानि यानि कर्माणि, तेन कर्मणा सर्वाभावरूपतया यो विश्लेष एव मोक्षः । आचा० २६१ । अष्टप्रकारकर्मबन्धवियोगो मोक्षः । दश० ३९ । मोक्षः-कृत्स्नकर्मक्षयादात्मनः स्वात्मन्यवस्थानम् । ठाणा० ४४६ । मोक्षम् । ज्ञाता० ५५ ।
मोक्खपहोयारग-मोक्षपथावतारकः, सम्यग्दर्शनादिषु प्राणिनां प्रवर्तकाविरयर्थः । सम० १११ ।
मोक्खमग्गगई-उत्तराध्ययनेषु अष्टाविंशतितममध्ययनम् । सम० ६४ ।
मोक्खलयं- । ओघ ९७ ।
मोक्खविणओ-इहलोकानपेक्षस्य श्रद्धानज्ञानशिक्षादिषु कर्मक्षयाय प्रवर्त्तनं मोक्षविनयः । उत्त० १७ ।
मोक्खहिकार-मोक्षकारणं । नि० चू० ६ अ ।
मोक्खा- । सूत्र० ३०७ ।
मोगरपाणी-मुद्गरपाणिः-यक्षविशेषः । अन्त० १९ । मुद्गरपाणिः-अन्तकृद्दशानां षष्ठमवर्गस्य तृतीयमध्ययनम् । अन्त० १८ ।
मोग्गरावड-मत्स्यविशेषः । जीवा० ३६ ।
मोग्गली-वल्लीविशेषः । प्रज्ञा० ३२ ।
मोग्गर-गुल्मविशेषः । प्रज्ञा० ३२ । मुद्गर-मर्दनः । प्रश्न० २१ । मुद्गरः-शस्त्रविशेषः । जीवा० ११७ । मुद्गरः । आव० ६६१ । मगदंति पुष्पा । नि० चू० द्वि० १४१ आ । भग० २३१ ।
मोग्गरगुम्म-मुद्गरगुल्मम् । जं० प्र० ९८ ।
मोग्गल्लसेलसिहर-मोद्गल्लशैलशिखरं-पर्वतविशेषः । व्य० द्वि० ४३२ आ ।
मोग्गलायण-मौद्गलायनं-अभिजिद्गोत्रम् । जं० प्र० ५०१ । कुत्सगोत्रे भेदः । ठाणा० ३९० ।
मोग्गलायणसगोत्त-मौद्गलायनगोत्रं अभिजिन्नक्षत्रगोत्रम् । सूर्य० १५० ।
मोघ-शुभफलापेक्षया निष्फलो यो मोघः । सम० ११० ।
मोचक बाह्याभ्यन्तरग्रन्थिबन्धनात् । सम० ५ ।
मोचग-मोचयत्यन्यानिति मोचकः । जीवा० २५६ ।
मोचाकाण्ड-कदलीस्तम्भः । प्रश्न० ८३ ।
मोच्चं-मोचनम् । मर० ।
मोच्छति-मोक्ष्यति-त्यक्ष्यति । भग० ३०६ ।
मोच्छिहिति-मोक्ष्यति-त्यक्ष्यति । जं० प्र० १६७ ।
मोटित-भग्नः । ज्ञाता० १५९ ।
मोट्ठिय-मौष्टिकः-मुष्टिप्रमाणः प्रोतचर्मरज्जुकः पाषाणगोलकः । उपा० ४७ । मौष्टिकः-मुष्टिप्रमाणपाषाणः । प्रश्न० ४८ ।
मोडण-नाशकम् । मर० ।
मोडणा-मोटना-गात्रभञ्जना । प्रश्न० ५६ ।
मोडिउण-आमोट्य । उत्त० १३९ ।
मोढेरकाहार-मोढेरकग्रामस्य समासन्नो देशः, परिभोग्यः । सूत्र० ३४३ ।
मोण-मौनं-वागनिरोधलक्षणम् । आव० ७८० । संयमानुष्ठानम् । आचा० २१२ । मौनः-संयमः, मुनेर्भावः मुनित्वं तदप्यसावेव मौनं वा वाचः संयमनम् । आचा० १४३ । मौनं-मुनेः इद सर्वज्ञोक्तं सम्यग्मौनम् । आचा० २०८ ।

मोणचर-मोनं-मोनव्रतं तेन चरति मोनचरकः । ठाणा० २९८ ।

मोणपय-मौनपदं-मौनीन्द्रं पद्यते-गम्यते मोक्षो येन तत् पदं-संयमः । सूत्र० ६१ ।

मोत्ति-मुक्तिः-निष्परिग्रहत्वमलोभत्वमित्यर्थः । ठाणा० ३७४ ।

मोत्तिया-द्वीन्द्रियजीवविशेषः । जीवा० ३१ ।

मोत्तूणं-मुक्त्वा । विशे० ९३५ ।

मोदकप्रिय-कुमारविशेषः । नंदी० १६६ ।

मोदती-गुलवक्खणी । नि० चू० तृ० ६४ अ ।

मोमइया-ठाहेऊण बीयाणि पच्छा ताए ओहाडिज्जंति । दश० चू० १११ अ ।

मोय-अब्भंतरो गिरो । नि० चू० तृ० २३ अ । मोकः-मूत्रम् । वृ० तृ० २०३ अ । मूत्रितम् । नि० चू० द्वि० १०० आ । मूत्रणम् । पिण्ड० १३१ । मोचः-प्रस्रवणं-कायिका । सूत्र० ११८ ।

मोयइ-वनस्पतिविशेषः । भग० ८०३ । मोचकी-वृक्षविशेषः । प्रज्ञा० ३१ ।

मोयए-मोचकः- परेषां कर्मबन्धनमोचकः । भग० ७ ।

मोयण-मोचनं नाम न अन्यथा मोक्षः, एतद् दत्त्वा मुच्यते इति वंदनकं देयम् । कृतिकर्मणि षड्विंशतितमो दोषः । आव० ५४४ ।

मोयपडिमा-मोका-परित्यागप्रधाना प्रतिमा मोकप्रतिमा । व्य० द्वि० ३४९ आ । मोकः-कायिकी तदा उत्सर्गप्रधाना प्रतिमा मोकप्रतिमा । व्य० द्वि० ३४९ अ । मोकप्रतिमा-प्रस्रवणप्रतिमा । ठाणा० ६५ । मोकप्रतिमा प्रश्रवणाभिग्रहः । ओप० ३२ । मोयप्रतिमा-प्रश्रवणप्रतिज्ञा । ठाणा० १९५ ।

मोयसमायार-'मोया' त्ति कायिका तत्समाचरणात्सभिक्षुस्तद्गन्धो भवति । आचा० ३६४ ।

मोया-कायिका । आचा० ३६४ । मोचा-चमरस्य विकुर्वणाविषयकोद्देशके नगरी । भग० १५३ । मोका-मोकानामनगरी, भगवतीसूत्रस्य तृतीयशतकस्य प्रथमोद्देशकः । भग० १६६ ।

मोयावइत्ता-मोचयित्वा साधुना तेजोऽपकायस्वप्राप्तिर्मार्गनीवदिति । ठाणा० २७६ ।

मोरंगाइ- । नि० चू० द्वि० ४३ अ (?) ।

मोरंगादि- । नि० चू० प्र० १३८ अ ।

मोरग-मयूरपिच्छनिष्पन्नम् । आचा० ३७२ ।

मोरगगिरमिस्सा-मयूरपिच्छं । नि० चू० प्र० १७७ आ ।

मोरगीवा-मयूरग्रीवा प्रज्ञा० ३६०

मोरपुत्तपाय-मयूरपुत्रपादः । आव० ८२२ ।

मोरपोसग-मयूरपोषकः । आव० ४३३ ।

मोरय-मुरियादि मुरियत्ति मोरयो सगवंसो । नि० चू० तृ० ४ अ ।

मोराग-मोराकं-सन्निवेशविशेषः । आव० १८९ ।

मोरिए-मौर्यः-सप्तमगणधरपिता । आव० २५५ ।

मोरियपुत्त-ताम्रलिप्तिनगर्यां गाथापतिः । भग० १६१ । मौर्यपुत्रः-सप्तमो गणधरः । आव० २४० ।

मोरियवंसपसुओ-मौर्यवंशप्रसूतः-बलभद्राभिधः श्रमणोपासको राजविशेषः । आव० ३१५ ।

मोरी-मयूरी-तत्प्रधाना विद्या । आव० ३१९ ।

मोलिकडे-अबद्धपरिधानकच्छ इत्यर्थः । सम० २० ।

मोलीण-जनपदविशेषः । भग० ६८० ।

मोल्ल-मूल्यम् । आव० ११६ ।

मोस-मोषः-स्तेयः । उत्त० ६३३ । मृषा-सत्याया विपरीतरूपा क्रोधाश्रितादिभेदा मृषा । आव० १६ । मृषावादम् । ठाणा० १३९ । मृषं-मृषावादम् । प्रश्न० ४ ।

मोसलि-मोसलिः-ग्रामविशेषः । आव० २१९ । मोसली-प्रत्युपेक्षणक्रियाविशेषः । ओघ० १०८ । तिर्यगूर्ध्वमधो वा घट्टना । उत्त० ५४१ । उड्ढमहो तिरियं वा कुड्डादिसु आमुसंतं पडिलेहेति मोसलो । नि० चू० प्र० १८१ आ ।

मोसली-प्रत्युपेक्षमाणवस्त्रभोगेन तिर्यगूर्ध्वमधो वा घट्टनरूपा । ठाणा० ३६१ ।

मोसा-मृषा विराधिनीत्वात् भाषाविशेषः । प्रज्ञा० २४८ । मृषा-अर्थानभिधायिनी अवक्तव्येत्यर्थः । भग० ५०० ।

मोसाणुबंधि-मृषा-असत्यं तदनुबध्नाति पिशुनासभ्यासद्भूतादिभिर्वचनभेदैस्तद् मृषानुबन्धिः । ठाणा० १८९ ।

मोसुवएस-मृषोपदेशः-मिथ्योपदेशकरणम् । आव० ८२० ।

मोहंझाणे-क्रोधादिरागादिव्यक्तिहीनः सामान्यो मोहः तद्ध्यानम् । आउ० ।

मोह-अज्ञानं, कामो वा । प्रश्न० ८५ । अज्ञानलक्षणश्च मोहः । आव० ५९७ । मोहः-गृहकर्त्तव्यताजनितवैचित्यात्मकः हेयोपादेयविवेकाभावात्मको वा । उत्त० १५१ । मोहः-अभिष्वङ्गः । उत्त० ४८५ । मोहः-अज्ञानम् । उत्त० ६२३ । मोघं-निष्फलं यथा भवति एव सुव्यत्ययाद्वा मोघो-निष्फलः मोहः स्नेहः । उत्त० २९२ । मोहः अज्ञानं मिथ्यात्वमोहनीयं वा । आचा० ११३ । मोहः-अज्ञानं मोहनीयभेदो वा । आ० १४१(?) । मोहः-पदार्थेष्वयथावबोधः, श्रोतृमनोमूढता । सम० ११० मोहो मोहनं वेदरूपमोहनीयोदयसम्पाद्यत्वाद् अस्याज्ञानरूपत्वाद् मोहः अब्रह्मणम् । प्रश्न० ६६ । मोहः-व्यामोहो वेदादयो वा । सूत्र० ३१९ । मोहः-मोहनं अब्रह्मणो नवम नाम । प्रश्न० ६७ । मोहः-ज्ञानावरणदर्शनावरणमोहनीयात्मकः । उत्त० २१३ । मोहः-अज्ञानम् । दश० ११९ । मोहनं मोहः-वितथग्राहः । विशे० ११८६ ।

मोहकल-मोहकर्दमः । भक्त० ।

मोहगुणा-मोहगुणाः-मोहयति जानानमपि जन्तुमाकुलयति प्रवर्तयति चान्यथेहेति मोहः, तस्य गुणाः तदुपकारिणः शब्दादयः । उत्त० २२६ ।

मोहजाल-मिथ्यात्वादि । आव० ७८८ ।

मोहट्ठाण-मोहस्थानानि-वारिमध्यावमग्नत्रसप्रमाणमारणादीनि त्रिंशत् । उत्त० ६१७ ।

मोहण-मैथुनसेवा । ज० प्र० ४५ । जीवा० २०० ।

मोहणगिह-मोहनगृहम् । जीवा० २६९ ।

मोहणघर-मोहनगृहं-सुरतगृहम् । ज० प्र० १०६ । सम्मोहोत्पादकं गृहं रतिगृहं वा । ज्ञाता० १२६ ।

मोहणघरगा-मोहनगृहकं-मैथुनसेवावासभवनानि तत्प्रधानानि गृहकाणि । ज० प्र० ४५ । जीवा० २०० ।

मोहणसील-मोहनशीलः-निधुवनप्रियः । ज्ञाता० ६३ ।

मोहणिज्ज-मोहनीयं-त्रिंशत्सङ्ख्याकं मोहनीयस्थानं महामोहबन्धनहेतुः । (?) । मोहनीयं-मिथ्यात्वमोहनीयम् । भग० ६३५ । मोहणीयं-येनात्मा मुह्यति तच्च ज्ञानावरणीय मोहनीयं वा । बृ० तृ० २३९ अ ।

मोहणीयं-सामान्येनैकप्रकृतिकर्ममोहनीयं मोहश्च, विशेषेण चतुर्थी प्रकृतिः । आव० ६६१ । सामान्येनाष्टप्रकारं कर्म, विशेषतः चतुर्थी प्रकृतिः । सम० ५२ ।

मोहनि-मैथुनसेवा करोति । जीवा० २०१ ।

मोहनीयं-येनात्मा मुह्यति तच्च ज्ञानावरणीयं मोहनीयं वा । व्य० प्र० १६५ । अ ।

मोहभावणा-मोहभावना । उत्त० ७०७ ।

मोहमहभयपयट्टओ-मोहमहाभयप्रकर्षकः, प्रवर्द्धकः मोहो मूढता महाभयं-अतिभीतिः, तयो प्रकर्षकः-प्रवर्तको प्रवर्द्धको वा यः स । प्रश्न० ५ ।

मोहर-मोखरं-मौखर्येण पूर्वसंस्तवपश्चात्संस्तवादिना बहुभाषितेन यल्लभ्यते तत् । प्र० १५४ । दिव्योपमा, मुखर एव मौखरो-मुखरतया चाटुकरणतो य आत्मानं पुत्रतया अभ्युपगमयति स मौखर इति भावः । ठाणा० ५१६ ।

मोहरिए-मुखं-अतिभाषणातिशयेन वदतीति मुखरः स एव मौखरिको-बहुभाषी, अथवा मुखेनारिमावहतीति निपातनात् मौखरिकः । ठाणा० ३७३ । मौखर्यं-धार्ष्ट्यं प्रायमसत्यासम्बद्धप्रलापित्वम् । आव० ८३० ।

मोहरिय-मौखर्यं धार्ष्ट्यं प्रायमसत्यासम्बद्धप्रलापित्वम् । उपा० १० । मुखरः-वाचालः-असम्बद्धप्रलापी । ज० प्र० २६४ ।

मोहामोह-अङ्गनाभिष्वङ्गः । आचा० १२८ ।

मोहियाणि-मोहितानि-निधुवनानि । ज्ञाता० १६५ ।

मोहोद्भवः-कामोद्भवः । ओघ० ७१ ।

मौञ्ज-काष्ठपादुकः । सूत्र० ११८ ।

मौद्गलिः-बौद्धविशेषः । आचा० १३५ ।

मौर्य-चन्द्रगुप्तवंशः, पाटलीपुत्रराजा । विशे० ४१० ।

मौर्यवंश-अशोकश्रीवंशः । विशे० ४०९ ।

मौर्यवंशसंभूत-बलभद्रः । विशे० ९५३ ।

म्रक्षणं-नवनीतम् । जीवा० १९२ ।

म्लेच्छा-कर्मभूमिजभेदः । सा० १३५ ।

## य

य-चः वाक्यान्तरद्योतनार्थः । जं० प्र० १४३ । यकारो-विकल्पदरिसणे । नि० चू० प्र० ६२ अ । यः-प्रति-समयमनुभूयमानायुषोऽपरायुर्दलिकोदयात् पूर्वपूर्वायुर्दलि-कविच्युतिलक्षणावस्था यस्मिंस्तदाऽऽवीचि । (?) ।

यक्षदिन्न-मालापहृतद्वारविवरणे जयन्तपुरे गृहपतिः । पिण्ड० १०८ ।

यक्षाः-श्वानः । बृ० प्र० ७४ आ ।

यक्षोत्तम-यक्षभेदविशेषः । प्रज्ञा० ७० ।

यज्ञ-प्रतिदिवसं स्वस्वेष्टदेवतापूजा । जीवा० २८१ ।

यज्ञायुधि-स एव यज्ञ एव दुरितवारणक्षमत्वादायुधं-प्रहरणं यस्यासौ यजमानः । विशे० ७७९ ।

यज्ञोपवीतं- । आव० १५७ ।

यतना-जयणाइ-उपयुक्तस्य युगमात्रदृष्टित्वम् । आचा० ३७२ (?) ।

यतितव्यं-प्राप्तेषु तदवियोगार्थं यत्नः कार्यः । ठाणा० ४४१ ।

यत्कडिल्लं-अयो-लोहं तन्मयम् । ओघ० ५० ।

यदुः-यादवः । उत्त० ४९० ।

यादृष्का-अभिनवप्रसूताणी । व्य प्र० २२५ अ ।

यदृच्छा-यथेच्छा । आव० ८१७ । सम० १११ । ठाणा० २६८ ।

यदृच्छावादिमत-मतविशेषः । भग० १०५ ।

यदृच्छावादी-मतविशेषः । भग० १०५ ।

यमंति-वष्नाति । व्य० प्र० १९० आ ।

यथाप्रवृत्तिकरण-इह गम्भीरभवोदधिमध्यविपरिवर्ती । जन्तुरनाभोगनिर्वर्त्तितः गिरिसरिदुपलघोलनाकल्पः यथाप्रवृ-त्तिकरणः । ठाणा० ३१ । यथैव प्रवृत्तं करणं-परिणाम-विशेषः । आव० ७५ ।

यथार्थं-आहोस्वित् पलाशाभिधानवत् । आव० ५१ ।

यथालन्द-उत्कृष्टलन्दं पंचरात्ररूपमेकस्यां वीथ्यां चरण-शीला यस्मात्ततोऽमी उत्कृष्टलन्दानतिक्रमः । बृ० प्र० २२९ अ ।

यथालन्दिक-पञ्चरात्रिद्विवालक्षणस्योत्कृष्टस्य लन्दस्यानति-क्रमेण चरन्तीति यथालन्दिकः । विशे० १४ ।

यथालन्दिककल्प- । विशे० १० ।

यथालघुस्वकं-एकान्तलघुकं-जघन्यं मध्यमं वा । व्य० द्वि० ३०७ आ ।

यथाश्रुतार्थव्याख्या- । विशे० १६६ ।

यथासङ्ख्यदोषः- । ठाणा० ४९६ ।

यथासंस्तृत-काष्ठं चासौ शिलेवायतिविस्तराभ्यां शिला चेति काष्ठशिला यथासंस्तृतम् । (?) ।

यन्त्र-अधिकरणविशेषः । भग० १८२ ।

यन्त्रक-तिलादिनिष्पीडनयन्त्रम् । शस्त्रविशेषः । भग० २१३ ।

यन्त्ररूपकपाट-यन्त्रसंयुक्तकपाटम् । पिण्ड० १०६ ।

यमक-विचित्रचित्रकूटपर्वतौ । ठाणा० ३२७ ।

यमदीय-सूत्रकृताङ्गस्य पञ्चदशमध्ययनम् । उत्त० ६१४ ।

यमनिका- । ठाणा० ४०२ ।

यमलपदं-वर्गद्वयस्य सामयिकी परिभाषा । अनु० २०६ । अष्टानामष्टानामङ्कस्थानानां सामयिकी संज्ञा । अनु० १०६ (?) ।

यमा- । ठाणा० २०२ ।

यमुनराजः- । भग० ४६१ ।

यव-उज्जयिनीनगरे गर्दभपिता । बृ० प्र० १६१ अ ।

यवधान्य-धान्यविशेषः । ओघ० १६३ ।

यवन-देशविशेषः । उत्त० ३३७ ।

यवनालक-कन्याचोलकः । विशे० ३५३ । कन्याचोलकः । आव० ४२ ।

यवनिका-वस्त्रम् । उत्त० ४२५ ।

यवमध्य-प्रकीर्णतपोविशेषः । उत्त० ६०१ ।

यवसः-आवसिका । बृ० प्र० २४७ आ । पौष्टिकाहारः । नदी० १४७ ।

यशोराजा-अनिलनरेन्द्रसुतः । बृ० प्र० १६० आ ।

यशस्वन्तः-किंपुरुषभेदविशेषः । प्रज्ञा० ७० ।

यशोजीवित-कीर्तिजीवितं यथा महावीरस्येति । ठाणा० ७ ।

यशोधर-दुर्गाद्युपयाचिते पिष्टमयकुक्कुटबलिदाता । आचा० २७ ।

यशोधरा-स्तोकस्यापि प्रमादजनितवेदनीयादिकर्मणो बहुतीव्रफलत्वे स्त्री:। दश० ११३। आधाकर्मसम्भवे अन्तर्दृष्टान्ते आभीरी। पिण्ड० ६४।
यशोभद्रसूरि-आचार्यविशेषः। पिण्ड० ४४।
यशोमती-शुद्धाधाकर्मगवेषणायां श्राविका। पिण्ड० ७५।
यष्टा-याजकः। उत्त० ५२३।
यष्टचा- । सम० १२६।
याइ-आइं भाषायां अरिः-शत्रुः। ज्ञाता० ८६।
याकिनी-हरिभद्राचार्यस्य धर्ममाता महत्तरा। दश० २८६।
याग-यज्ञः। उत्त० ३१४।
याज्ञवल्क्य-स्मृतिविशेषः। आव० १५८।
यातना-प्राणेभ्यो जीवस्यातिपातना। प्रश्न० ६।
यातुधान- । आचा० २४३।
यात्रा-महिमा। आव० ५३७। यात्रा। ठाणा० २५।
यात्राभृतकः-यात्रा-देशान्तरगमनं तस्या सहाय इति भ्रियते यः स। ठाणा० २०३।
यादसां- । आचा० २२०।
यानपात्र- । आचा० ४१ (?)।
यापय-निर्वाहय। बृ० प्र० २८१ आ।
यापयति-निर्वाहयति। व्य० प्र० १०७ आ।
यापित्वस्य बोधपर्यायत्वात्। ठाणा० २४१।
यावंतिकमिश्रम्- । बृ० प्र० ८३ अ।
यावक-लाक्षारसः। अन्त० ९।
यावज्जीविकव्रत मध्यमविदेहतीर्थंकरतीर्थेषु भवति इति तेषूपस्थापनाऽभावाद्। ठाणा० ३२३।
यावत्-परिमाणे, मर्यादायाम्, अवधारणे वा। आव० ४५५।
यावत्कथा-यावती-यत्परिमाणा कथा-मनुष्योऽयं देवदत्तादिर्वाऽयमिति व्यपदेशलक्षणा। ठाणा० ११६।
यावत्कथिक-आजन्मभावि। दश० २६।
यावत्कथितम्- । ठाणा० ३६४।
यावन्तिके- । आचा० ४१०।
यावपंगुणे-उद्घाटयेत्। सूत्र० ६५।
यावयट्ठा-यावदर्थं-अपरिसमाप्तम्। दश० १८२।
युक्ति-अन्यान्यभक्तिभिस्तथाविधद्रव्ययोजनम्। ठाणा० ४२१।
युग-पञ्चाब्दिकः कालविशेषः। ठाणा० ७६। सुषमदुषमादिः। भग० ६३१। कालः। व्यव० प्र० ३१७ आ।
युगन्धर-कूबरम्। ज० प्र० २११।
युगमत्स्य-मत्स्यविशेषः। प्रश्न० ९।
युग्मप्रदेशं घनचतुरस्रं-अष्टपरमाण्वात्मकमष्टप्रदेशावगाढं च तच्चैवं-चतुष्प्रदेशात्मकस्य पूर्वोक्तस्य प्रतरस्योपरि चत्वारोऽन्ये परमाणवः स्थाप्यन्ते। प्रज्ञा० १२।
युग्मप्रदेशं घनत्र्यस्रं-चतुष्परमाण्वात्मकं चतुःप्रदेशावगाढं च प्रतरत्र्यस्रस्यैव त्रिप्रदेशात्मकस्य सम्बन्धिन एकस्याणोरुपर्येकोऽणुः स्थाप्यते ततो मिलिताश्चत्वारो भवन्ति। प्रज्ञा० १२।
युग्मप्रदेशं घनवृत्तं-द्वात्रिंशत्प्रदेशं द्वात्रिंशत्प्रदेशावगाढं च तच्चैवं-पूर्वोक्तद्वादशप्रदेशात्मकस्य प्रतरवृत्तस्योपरि द्वादश, तत उपरिष्टादधश्चान्ये चत्वारश्चत्वारः परमाणव इति। प्रज्ञा० ११।
युग्मप्रदेशं घनायतं-द्वादशपरमाण्वात्मकं द्वादशप्रदेशावगाढं च, तत्र प्रागुक्तस्य षट् प्रदेशस्य प्रतरायतस्योपरि तथैव तावन्तः परमाणवः स्थाप्यन्ते। प्रज्ञा० १२।
युग्मप्रदेशं प्रतरचतुरस्रं-चतुष्परमाण्वात्मकं चतुष्प्रदेशावगाढं च, तत्र तिर्यग् द्विप्रदेशे द्वे पङ्क्ती स्थाप्यन्ते। प्रज्ञा० १२।
युग्मप्रदेशं-प्रतरत्र्यस्रं-षट् परमाणुनिष्पन्नं षट् प्रदेशावगाढं च, तत्र तिर्यग् निरन्तरं त्रयः परमाणवः स्थाप्यन्ते, तत आद्यस्याध उपर्यधो भावेनाणुद्वयं द्वितीयस्याध एकोऽणुः। प्रज्ञा० ११।
युग्मप्रदेशं प्रतरायतं-षट् परमाण्वात्मकं षट् प्रदेशावगाढं च, तत्र त्रिप्रदेशं पङ्क्तिद्वयं स्थाप्यते। प्रज्ञा० १२।
युग्मप्रदेशं श्रेण्यायतं-द्विपरमाणु द्विप्रदेशावगाढं च, तत्र तिर्यग् निरन्तरं अणुद्वयं स्थाप्यते। प्रज्ञा० १२।
युग्मप्रदेशं प्रतरवृत्तं-द्वादशपरमाण्वात्मकं द्वादशप्रदेशावगाढं च, तत्र निरन्तरं चत्वारः परमाणवश्चतुर्ष्वाकाश-

प्रदेशेषु रुचकाकारेण व्यवस्थाप्यन्ते, ततस्तत् परिक्षेपेण शेषा अष्टौ । प्रज्ञा० १२ ।

युग्यम्-यानम् । दश० २१८ ।

युग्यकम्-गोल्लविषये जंपानं द्विहस्तप्रमाण चतुरस्रं सवेदिकमुपशोभितम् । ठाणा० २४० ।

युज्यते-व्यापार्यंते । प्रज्ञा० ३१७ ।

युतायां-पृथग्भूतायाम् । व्य० (?) ।

युधिष्ठिरः-पाण्डुराजज्येष्ठपुत्रः । प्रश्न० ८७ ।

यूका-त्रीन्द्रियजीवविशेषः । प्रज्ञा० २३ । षट्पदिका । आव० ५७४

यूथिका-'जूई' इति प्रसिद्धा । जीवा० १९१ ।

यूपक-संज्झाच्छेयावरणो य जूयओ सुक्कदिणतिन्नि । (सन्ध्याच्छेदावरणश्च यूपकः शुक्ले दिनांस्त्रीन्) । अनु० १२१ । वेटकाख्यं जलमध्यवर्त्ति तटम् । बृ० द्वि० ३४ अ ।

यूव-यूपः-मेरोरपरस्यां पातालकलशः । जीवा० ३०६ ।

योग-योजनं योगो-व्यापारः । विशे० २०९ । यागः-देवपूजा । ज्ञाता० ४१ । चीजापानोद्भेदपोषणकरणम् । राज० १०९ । ठाणा० २५ ।

योगनिरोध-एतदभिधानं शुक्लध्यानम् । भग० १८४ ।

योगराज-आधाकर्मसम्भवे अन्तर्दृष्टान्ते आभीरः । पिण्ड० ६४ ।

योगसंग्रहः- । बृ० तृ० ९१ अ (?) ।

योगसङ्ग्रहाः-यैर्योगाः-शुभमनोवाक्कायव्यापाराः सम्यग् गृह्यन्ते-स्वीक्रियन्ते ते आलोचनानिरपलापादयो द्वात्रिंशत् । उत्त० ६१८ ।

योगड-बलीवर्दः । नि० चू० तृ० ३७ आ ।

योत्कारः- । विशे० ६०६ ।

योत्रिग्यन्ते-वहनाय स्वीक्रियन्ते । ओघ० ७५ ।

योधनी-आधाकर्मसम्भवे अन्तर्दृष्टान्ते वत्सराजस्य स्त्री । पिण्ड० ६४ ।

योधाः-योधवद्भ्यो विशिष्टतरः । राज० १११ ।

योनका-धात्रीविशेषः । ज्ञाता० ४१ ।

योवारि-धान्यविशेषः । बृ० द्वि० १९९ आ ।

यौवनिका-युवावस्था । नंदी० १६१ । नंदी० १६८ । प्रज्ञा० ४७५ ।

## र

रंगंमि-पञ्चवासुदेवनिदानकारणम् । आव० १६३ टी० ।

रंग-रङ्गः । आव० ३४४, ३६० । मण्डपः । आव० ७०३ । रङ्गः । उत्त० १६३ । रंगं-नाट्यस्थानम् । बृ० द्वि० २२५ अ । रङ्गः-रक्तावयवच्छविविचित्ररूपः । दश० ८६ । रङ्गवत्, रक्तम् । ठाणा० ४४६ ।

रंगजण-रङ्गजनः-नृत्यप्रेक्षकजनः । आव० ५२८ ।

रंगट्ठाणं- । भग० ५२६ ।

रंगण-रङ्गणं-रागाद्युपरञ्जनम् । औप० ३५ । ठाणा० ४६४ ।

रंजण-रञ्जनं-जीवस्वरूपोपरञ्जनकारि रागादिकं वस्तु । प्रश्न० १५७ ।

रंटणिया-रुण्टनकादि-रुदितक्रिया । ज्ञाता० २०२ ।

रंडा-रण्डा-मतधवा स्त्री । ओघ० ७२ । रण्डा-विधवा स्त्री । आव० ६४० ।

रंति-कामक्रिडा । दे० ।

रंभा-बलेन्द्रस्याग्रमहिषी । भग० ५०३ । धर्मकथायां द्वितीयवर्गे तृतीयमध्ययनम् । ज्ञाता० २५१ ।

र-रः-पूरणार्थे निपातः । आव० ५२७ । रः-अयं निपातः किलशब्दार्थः । दश० ७९ ।

रइ-रतिः-आनन्दः । भग० ६१८ । धृतिः । उत्त० ३९८ । रतिः-विषयेषु मोहनीयादेयाच्चित्ताभि रतिः । भग० ८० । रति-दयिताङ्गसङ्गजनिता प्रीतिः । उत्त० ४२८ ।

रइकरा-रतिकराः-नन्दीश्वराभिधानाष्टमद्वीपचक्रवालविदिक्-चतुष्टयव्यवस्थिता झल्लरीसंस्थिताः पर्वतविशेषाः । प्रश्न० ९६ ।

रइत्ताण-रजस्त्राणं-पात्रवेष्टनकम् । बृ० द्वि० २३७ अ ।

रइपसत्त-रतिप्रसक्तः-रमणप्रसक्तः । सूर्य० २९४ ।

रइप्पिया-किन्नरेन्द्रस्याग्रमहिषी । भग० ५०४ ।

रइमोहणिज्ज-यदुदयात् बाह्याभ्यन्तरेषु वस्तुषु प्रमोदमाधत्ते तत् रतिमोहनीयम् । प्रज्ञा० ४६९ ।

रइयं-रचित-औद्देशिकभेदरूपम् । भग० २३१ । रचितं-औद्देशिको भेदो-यन्मोदकचूर्णादि पुनर्मोदकतया कूरदध्यादिकं वा यत्करम्बकादितया विरचितं तत् । औप० १०१ । रचितः-स्वयमेव रचनां प्राप्तः । जीवा० १६० ।

रचितः-स्वस्वनामकर्मोदयनिर्वर्त्तितः । जीवा० २७१ । रतिदः-रम्यः । जीवा० २७१ । रचितः-स्वकर्मणा निष्पादितः । जीवा० २७२ । रचितं-न्यस्तम् । ज्ञाता० २५ ।

रइयए- । ज्ञाता० ४९ ।

रइयग-रचितकं-कांस्यपात्रादि । व्य० प्र० १६४ अ ।

रइया-रचिता-विरचिता रतिदा वा । जीवा० २२६ । रचितः स्वयमेव रचनां प्राप्तः । प्रज्ञा० ८६ ।

रइल-रजोवद्, जलवृद्धिहानिभ्यां पङ्कबहुलम् । जीवा० ३०३, ३७० ।

रइल्लय-रचितम् । ओघ० १२९ ।

रइल्लिय-रजोयुक्तम् । भग० २५४ ।

रइवक्का-रतिवाक्या-रतिकर्तृणि वाक्यानि यस्यां सा रतिवाक्या चूडा । दश० २७० ।

रई-पद्मप्रभोः प्रथमा शिष्या । सम० १५२ । रतिः-विषयरागः । प्रश्न० १३७ । रतिः-रमणं रतिः-संयमविषया धृतिः । उत्त० ८२ ।

रउग्घाओ-रज उद्घातः-विश्रसा परिणामतः समन्ताद्रेणुपतनम् । आव० ७३५ ।

रउग्घाय-रजोद्घातः-दिशां रजस्वलत्वम् । भग० १९६ ।

रउस्सला-रजस्वला-रजोयुक्ता । भग० २०६ । रजस्वला-रजोयुक्ता । जं० प्र० १६७ ।

रए-रजः-स्पृष्टावस्थो रेणुः । औप० ५६ । रजः-श्लक्ष्णतरा रेणुपुद्गलः । जीवा० २४५ । रजः-श्लक्ष्णरेणुपुद्गलः । जं० प्र० ३८९ । रजः-कठिनं स्वेदार्द्रमलरूपम् । पांशु वा । उत्त० १२३ ।

रएइ-रञ्जयति । ज्ञाता० २०५ ।

रएउं-रञ्जयित्वा । ओघ० १४३ ।

रओ-पृथ्वीकाय आरण्यं वायूद्धूतमागतं रजः । आव० ७३३ ।

रक्ख-रक्षः-वैश्रमणस्य पुत्रस्थानीयो देवः । भग० २०० ।

रक्खतिया-धनगोपपत्नी । ज्ञाता० ११५ ।

रक्खमूलिया- । निरय० २५ ।

रक्खस-राक्षसः-त्रिंशत्तम मुहूर्तः । सूर्य० १४६ । जं० प्र० ४९१ । राक्षसः-व्यन्तरः । बृ० द्वि० २६४ आ । व्यन्तरभेदविशेषः । प्रज्ञा० ६९ ।

रक्खा-रक्षा जीवरक्षणस्वभावत्वात् । अहिंसायास्त्रयस्त्रिंशत्तमं नाम । प्रश्न० ९९ ।

रक्खिअज्ज-रक्षितार्यः । आव० २९६ ।

रक्खिज्जा-रक्षितार्याः । उत्त० १७३ ।

रक्खिए-रक्षोऽस्यास्तीति रक्षिकः, रक्षायां नियुक्तो राक्षिको वा । व्य० प्र० १९० अ ।

रक्खियज्ज-पितृप्रव्राजकः । नि० चू० द्वि० २९ आ । नि० चू० द्वि० १०९ आ ।

रक्खियस्सामिणो- । नि० चू० द्वि० १०९ आ ।

रक्खी-सप्तदशमतीर्थंकृत्प्रथमाशिष्या । सम० १५२ ।

रक्खोपगा- । जीवा० २६० ।

रक्खोवगय-रक्षोपगतः-रक्षामुपगतः, सततं प्रयुक्तरक्षः । भग० १९४ ।

रक्तं-गेयरागेण रक्तः-भावितः । अनु० १३२ ।

रक्तकणवीरं- । जीवा० १९१ ।

रक्तकम्बलम्- । जीवा० १९१ ।

रक्तचन्दन-चन्दनविशेषः । सम० १३८ ।

रक्तपटवेष-रक्तवस्त्रवेषः । नंदी० १५७ ।

रक्तपट्टलिङ्ग-तच्चणियः । आव० ६२८ ।

रक्तपाच-दीर्घग्रीवो जलचरः । नि० चू० तृ० ५६ आ ।

रक्तबन्धुजीवः- । जीवा० १९१ ।

रक्तरत्न-पद्मरागरक्तम् । अनु० २१४ ।

रक्तवती-नदीविशेषः । ठाणा० ७५ । प्रपातह्रदविशेषः । ठाणा० ७५ ।

रक्ता-शिखरिणिवर्षधरे पञ्चम कूटम् । ठाणा० ७२ । नदीविशेषः । ठाणा० ७५ । प्रपातह्रदविशेषः । ठाणा० ७५ ।

रक्तावती-वापीनाम । जं० प्र० ३७१ ।

रक्ताशोकं- । जीवा० १९१ ।

रक्तोत्पलम्- । जीवा० १९१ ।

रक्तोदा-शिखरिणिवर्षधरे अष्टमं कूटम् । ठाणा० ७२ ।

रङ्गमध्यं- । भग० ४८२ ।

रङ्गमध्यगतः- । आव० १६८ ।

१६३ ।

**रयणामय**-रत्नमयम् । प्रज्ञा० ९५ ।

**रयणालंकार**-रत्नालङ्कारं-मुकुटम् । जं० प्र० २१६ ।

**रयणावलिभद्द**-रत्नावलिभद्रः-रत्नावलिद्वीपे पूर्वार्द्धाधिपतिर्देवः । जीवा० ३६९ ।

**रयणावलिमहाभद्द**-रत्नावलिमहाभद्र-रत्नावलिद्वीपेऽपरार्द्धाधिपतिर्देवः । जीवा० ३६९ ।

**रयणावलिमहावर**-रत्नावलिमहावरः-रत्नावलिसमुद्रेऽपरार्द्धाधिपतिर्देवः । जीवा० ३६९ ।

**रयणावलिवर**-रत्नावलिवरः-द्वीपविशेषः, समुद्रविशेषश्च । जीवा० ३६८ । रत्नावलिवरः-रत्नावलिसमुद्रे पूर्वार्द्धाधिपतिर्देवः । जीवा० ३६९ । रत्नावलिवरः-रत्नावलिवरे समुद्रे पूर्वार्द्धाधिपतिर्देवः । जीवा० ३६९ ।

**रयणावलिवरभद्द**-रत्नावलिवरभद्र-रत्नावलिवरे द्वीपे पूर्वार्द्धाधिपतिर्देवः । जीवा० ३६९ ।

**रयणावलिवरमहाभद्द**-रत्नावलिवरमहाभद्रः-रत्नावलिवरे द्वीपेऽपरार्द्धाधिपतिर्देवः । जीवा० ३६९ ।

**रयणावलिवरमहावर**-रत्नावलिवरमहावरः- रत्नावलिवरे समुद्रेऽपरार्द्धाधिपतिर्देवः । जीवा० ३६९ ।

**रयणावलिवरावभासभद्द**-रत्नावलिवरावभासभद्रः-रत्नावलिवरावभासे द्वीपे पूर्वार्द्धाधिपतिर्देवः । जीवा० ३६९ ।

**रयणावलिवरावभासमहाभद्द**-रत्नावलिवरावभासमहाभद्रः-रत्नावलिवरावभासे द्वीपेऽपरार्द्धाधिपतिर्देवः । जीवा० ३६९ ।

**रयणावलिवरावभासमहावर**-रत्नावलिवरावभासमहावरः रत्नावलिवरावभासे समुद्रेऽपरार्द्धाधिपतिर्देवः । जीवा० ३६९ ।

**रयणावलिवरावभासवर**-रत्नावलिवरावभासवरः-रत्नावलिवरावभासे समुद्रे पूर्वार्द्धाधिपतिर्देवः । जीवा० ३६९ ।

**रयणावली**-रयणेहिं रयणावली । नि० चू० प्र० २५४ आ । नि० चू० प्र० ३०६ आ । रत्नावली-आभरणविशेषः । तपो विशेषः । अन्त० २५ । रत्नमयी । भग० ४७७ । रत्नावलिः-द्वीपविशेषः, समुद्रविशेषश्च । जीवा० ३६८ । रत्नावली-आभरणविशेषः, रत्नावलीव रत्नावली, यथा हि रत्नावली उभयतः आदिसूक्ष्मस्थूलस्थूलतरविभागकाहलिकाख्यसौवर्णावयवद्वययुक्ता भवति, पुनर्मध्यदेशे स्थूलविशिष्टमण्यलङ्कृता च भवति, एवं यत्तपः पट्टादावुपदर्श्यमानमिममाकारं धारयति तद् रत्नावलीत्युच्यते । अन्त० २५ ।

**रयणावलीवरावभास**-रत्नावलिवरावभासः-द्वीपविशेषः समुद्रविशेषश्च । जीवा० ३६८ ।

**रयणाहिय**-रत्नाधिकः-प्रव्रज्यापर्यायाधिकः, श्रुताधिकः समवया वा । सूत्र० २४४ ।

**रयणि**-रत्निः-हस्तः । भग० ३०९ । रत्निः-द्विवितस्तिप्रमाणा, हस्तः । जीवा० ४० ।

**रयणिखेत्त**-रजन्या एव । सम० ८६ ।

**रयणी**-द्वे वितस्ती रत्निः-हस्तः । अनु० १५८ । हस्तः । ठाणा० ३६, २०४, २८६ । प्रज्ञा० ४८, ४२६ । भग० २७५ । ठाणा० ३६३ । चतुर्विंशत्यङ्गुलप्रमाणः । भग० २७५ । चमरेन्द्रस्य तृतीयाऽग्रमहिषी । भग० ५०३, ५०५ । चतुर्विंशतिरङ्गुलानि रत्निः । नामकोशादौ "बद्धमुष्टिर्हस्तो रत्निः ।" जं० प्र० ९४ । धर्मकथायां प्रथमवर्गे तृतीयमध्ययनम् । ज्ञाता० २४७ । आमलकल्पायां गाथापतिः । ज्ञाता० २५१ । रत्नीगाथापतेर्दारिका । ज्ञाता० २५१ । बद्धमुष्टिको हस्तः रत्निः । जं० प्र० १६६ । रजनी-पिण्डदारुहरिद्रा । उत्त० १४२ । रत्निः-विततामुलिर्हस्तः । सम० १३ ।

**रयणीपमाणमित्त**-रत्निप्रमाणमात्रं-यथा दण्डो हस्तप्रमाणो भवति तथा । ओघ० २१४ ।

**रयणुच्चए**-रत्नानां नानाविधानामुरु-प्राबल्येन चयः-उपचयो यत्र स रत्नोच्चयः । सूयं० ७८ ।

**रयणुच्चओ**-रत्नोच्चयः-मेरुपर्वतः । सू० द्वि० २६५आ ।

**रयणुच्चय**-पद्योदयमं स्वप्नम् । ज्ञाता० २० ।

**रयणोच्चय**-रत्नानां-नानाविधानामुरु-प्राबल्येन चयः-उपचयो स रत्नोच्चयः, मेरुनाम । जं० प्र० ३७५ ।

**रयणोच्चया**-रत्नोच्चया-उत्तरपश्चिमरतिकरपर्वतस्य दक्षिणस्यामीशानदेवेन्द्रस्य वसुमाभाया अग्रमहिष्या राजधानी । जीवा० ३६५ ।

**रयणोरुजाल**-रत्नोरुजालं-मुक्ताविविधविशेषः । जीवा० २६६ । रत्नोरुजाल-रत्नमयं जङ्घायाः प्रलम्बमानं

सङ्कुलकं सम्भाव्यते । जं० प्र० १०६ ।

रयत-रजतकाण्डं-द्वादशं, रजतानां विशिष्टो भूभागः । जीवा० ८६ ।

रयत्तणो- । ठाणा० ३९३ ।

रयत्ताणं-रजस्त्राणम् । ओघ० १९९ । रजस्त्राणं-पात्रवेष्टनचीवरम् । प्रश्न० १५६ । रजस्त्राणम् । आव० ६२३ । रजस्त्राणं-आच्छादनविशेषः । ज्ञाता० १३ । रजस्त्राणं-आच्छादनविशेषः । जं० प्र० २८५ ।

रययकूड-रजतकूटं-नन्दनवने पञ्चमं कूटनाम । जं० प्र० ३६७ ।

रययवडिसए-रजतावतंसकः-अपरस्यामवतंसकः । जीवा० ३६१ ।

रयरेणुविणासण-श्लक्ष्णतरा रेणुपुद्गला रजस्त एव स्थूला रेणवः रजांसि च रेणवश्च रजो-रेणवस्तेषां विनाशनं रजोरेणुविनाशनम् । जीव० २४५ ।

रयसंसट्ठहडा-रजःसंसृष्टाहृता-पृथिवीरजः सम्बद्धा नीता प्राभृतिका । आव० ५७६ ।

रयसुसंपउत्तं-शृङ्गमयो दारुमयो वंशमयो वाऽङ्गुलिकोशस्तेनाहतायास्तन्त्र्याः स्वरप्रकारो लयस्तमनुसरद् गेयं लयसुसंप्रयुक्तम् । जीवा० १९५ ।

रयहरणं-रजोहरणम् । आव० ३१९, ७९३ । रजोहरणं-धर्मध्वजः । पिण्ड० १३ । ज्ञाता० ५३ ।

रयहरणचाय-रजोहरणवर्जः, रजोहरणग्रहणम् । व्य० द्वि० २७ आ ।

रयहरणपडिग्गहमत्ता-रजोहरणप्रतिग्रहमात्रा । आव० ३५६ ।

रयहरणसीसगा- । नि० चू० प्र० २४६ अ ।

रयिप्पिया-धर्मकथायां पञ्चमवर्गेऽध्ययनम् । ज्ञाता० २५२ ।

रयुग्घात-महास्कन्धावारगमनसमुद्धता इव विश्रसापरिणामतो समंता रेणुपतनं । नि० चू० तृ० ७० अ ।

रयुग्घाय-रजउद्घातः-रजस्वला दिशः । अनु० १२१ ।

रयोहरण-रजोहरणम् । प्रश्न० १५६ ।

रल्लग-रल्लकः-कम्बलविशेषः । जं० प्र० १०७ ।

रल्ला-दधिजन्तुविशेषः । आव० ६२४ ।

रव- । ज्ञाता० १५१ ।

रवइ-रवते-शब्दं करोति । जीवा० २४८ ।

रविउ-द्रावितः-पण्डको नीतः । विशे० ६२७ ।

रविगत-जत्थ सूरो ट्ठितो तं रविगतं । नि० चू० तृ० ९९ अ ।

रविगय-रविगतं यत्र रविस्तिष्ठति । विशे० १२९४ ।

रवित-रतम् । ज्ञाता० १६० ।

रस-रस्यते-आस्वाद्यत इति रसः । प्रज्ञा० ४७३ । अत्यन्तात्मभक्तिरूपः । उत्त० २९६ । रस्यते-अन्तरात्मनाऽनुभूयत इति रसः । अनु० १३५ । रसं-रसग्राहकं रसनेन्द्रियम् । रस्यते-आस्वाद्यतेऽनेन तिक्तादिरूपम् । प्रज्ञा० ५९९ । श्रोतॄणामाक्षेपकारी गुणविशेषः । बृ० प्र० १९२ आ । विपाकः । विशे० ५९५ । इक्षुरसः । नि० चू० द्वि० १०७ अ । धातुपाणिएण तंबगादि आसित्तं सुवण्णादि भवति सो रसो भण्णति । नि० चू० द्वि० ८६ आ । रसः लक्षणम् । दश० चू० ४८ । रसः-शृङ्गारादिः । प्रश्न० ११७ । रसः-मधुरादिकः, भोगो वा । उत्त० ४०६ । तीमनकाञ्जिकादिः । ठाणा० ३८६ । विकृतिः । आचा० ३०६ । फाणितादिद्रवः । दश० ८४ । रसः-निष्यन्दः सारः । दश० ११० ।

रसकषाय-हरीतक्यादीनां रसः । आव० ३६० ।

रसगा-रसमनुगच्छन्तीति रसगाः-कटुतिक्तकषायादिरसवेदिनः संज्ञिनः इत्यर्थः । आचा० २३७ ।

रसगारव-रसगौरवं रसेन गौरवं-इष्टरसप्राप्त्यभिमानाप्राप्तप्रार्थनद्वारेणात्मनोऽशुभभावगौरवम् । आव० ५७९ ।

रसघातः- । उत्त० ५८० ।

रसट्ठाए-रसार्थं सरसमिदमहमास्वादयामीति धातुविशेषो वा रसः, स चाशेषधातूपलक्षणं ततस्तदुपचयः स्यादित्येतदर्थम् । उत्त० ६६७ ।

रस(सर)देवी-चतुर्थवर्गे नवममध्ययनम् । निरय० ३७ ।

रसना-जिह्वा । जीवा० २७३ ।

रसनिज्जूढ-रसनिर्यूढं-कदशनम् । दश० २३१ ।

रसनिज्जूहणया-घृतादिरसपरित्यागः । ठाणा० २३३ ।

रसपरिच्चाओ-रसत्यागः । भग० ९२१ ।

रसमाणप्पमाणे-रसमानप्रमाणं-सेतिकादेश्चतुर्भागाधिकमभ्यन्तरशिखायुक्तं यद्रसमानं क्रियते तत् । अनु० १५२ ।

रसमान-कर्षादि । ठाणा० १९८ । चतुःषष्टिकादि । जं० प्र० २२७ ।
रसमुच्छिए-तद्विशितास्वादस्तत्र मूर्च्छितो-गृद्धो रसमूर्च्छितः । उत्त० ४३८ ।
रसमेह-रसजनको मेघो रसमेघः । जं० प्र० १७४ ।
रसया-रसाज्जाता रसजाः-तक्रारनालदधितीमनादिषु पायुकृम्याकृतयोऽति सूक्ष्मा जीवाः । दश० १४१ ।
रसवती-पाकनकादि । व्य० प्र० ८१ अ ।
रसवाणिज्ज-रसवाणिज्यं-रसव्यापारः । आव० ८२९ ।
रसहरणी-रसो ह्रियते-आदीयते यया सा रसहरणी-नाभिनालम् । भग० ८८ ।
रसाः-पृथगेव शृङ्गारादयो वा । उत्त० २९६ ।
रसाञ्जनम्- । दश० ११८ ।
रसातण-रसः-अमृतरसस्तस्यायनं-प्राप्तिः रसायनम् । ठाणा० ४२७ ।
रसायण-रसः-अमृतरसस्तस्यायनं-प्राप्तिः रसायनम् । आयुर्वेदस्य सप्तमाङ्गम् । विपा० ७५ ।
रसालू-मज्जिका । प्रश्न० १६३ । रसालूः-मज्जिका । भग० ३२६ । रसालूः-मज्जिका । सूर्य० २९३ ।
रसावण-मज्जावणो । नि० चू० प्र० १५४ आ । मद्यापणम् । बृ० द्वि० १८६ अ ।
रसिए-रसिकः-स्निग्धमधुरः । बृ० प्र० २१७ अ ।
रसणी-रसिनी-सौवीरिणी । बृ० प्र० २७३ आ ।
रसितं-रसिकं-माधुर्याद्युपेतम् । ठाणा० ३७५ ।
रसियं-रसितं-शूकरादिशब्दितमिव करुणोत्पादकम् । प्रश्न० १६० । रसितं-रसयुक्तं दडिमाम्रादि । आव० ७२६ ।
रसुंठ- । भग० ८०२ ।
रसेसि-रसैषी पानार्थी । आचा० ३१४ ।
रसोतीए- । नि० चू० प्र० १९७ आ ।
रसोदए-पुष्करवरसमुद्रादिषु रसोदकम् । प्रज्ञा० २८ ।
रस्सी-रश्मिः-प्रग्रहः । उत्त० ५०७ ।
रस्सीमंडल-रश्मिमंडलः-सूर्यः । आव० १९२ ।
रह-क्रीडारथादयः । जं० प्र० ३० । रणरथः । जं० प्र० ३७ । विजनम् । ठाणा० ४६६ । रथः । प्रश्न० ८ । रथः-रथाङ्गः चक्रम् । प्रज्ञा० ६०० । यानरथः सङ्ग्रामरथश्च । अनु० १५९ । रथः-क्रीडारथः सङ्ग्रामरथश्च । जीवा० १८९ । रथः-द्विप्रकारः यानरथसङ्ग्रामरथभेदभिन्नः । जीवा० २८१ । रथः-शकटः । बृ० प्र० ७४ आ । भग० २३७ ।
रहकार- । नि० चू० प्र० १२० अ ।
रहघणघणाइय-रथघणघणायितम् । जीवा० २४७ ।
रहचरियं- । भग० ६८९ ।
रहछाया-रथच्छाया । प्रज्ञा० ३२७ ।
रहजोही- । ज्ञाता० ३८ ।
रहट्ठाण-रहःस्थानं-गुह्यापवरकमन्त्रगृहादि । दश० १६६ ।
रहण- । ठाणा० ४६६ ।
रहणेमी-रथनेमिः । दश० ९६ ।
रहनेउर-रथनूपुरं-विद्याधरनगरविशेषः । आव० १४४ ।
रहनेउरचक्कवालपामोक्खा-रथनूपुरचक्रवालप्रमुखाः-विद्याधरनगरविशेषाः । जं० प्र० ७४ ।
रहनेमिज्जं-उत्तराध्ययने द्वाविंशतितममध्ययनम् । सम० ६४ ।
रहनेमियं-उत्तराध्ययनेषु द्वाविंशतितममध्ययनम् । उत्त० ९ ।
रहनेमी-रथनेमिः-समुद्रविजयस्य द्वितीयः सुतः । उत्त० ४९६ ।
रहपहकर-रथनिकरः । औप० ४ ।
रहमद्दणे- । ज्ञाता० २२४ ।
रहमुसल-रथमुशलः-सङ्ग्रामविशेषः । भग० ३१७ । रथमुशलः-यत्र रथो मुशलेन युक्तः परिधावन् महाजनक्षयं कृतवान् असौ रथमुशलःसङ्ग्रामः । भग० ३२२ । रथमुशलम् । आव० ८१२ । रथमुशलः-सङ्ग्रामविशेषः । आव० ६८४ । रथमुशलम् । निरया० १८ ।
रहरेणू-रथगमनोत्खात-रथरेणुः । ठाणा० ४३५ । रथरेणुः-रथगमनोत्खात रेणुः । अनु० १६३ । रथगमनात् रेणू रथरेणुः । जं० प्र० ९४ । रथगमनोत्खात रेणू रथरेणुः । भग० २७५ ।
रहवीरपुर-रथवीरपुरं-बोटिकोत्पत्तिस्थानम् । आव० ३१२ । रथवीरपुरं-यत्र बोटिकानां दृष्टिरुत्पन्ना तन्नगरम् । आव० ३२३ । रथवीरपुरं-यत्र बोटिकदृष्टिरुत्पन्ना

रत् कर्वटविशेषः । उत्त० १७८ । रथवीरपुरम् । अष्टमनिह्नवोत्पत्तिस्थानम् । विशे० ९३४ ।

रहसंगेल्ली-रथसङ्केली-रथसमूहः । ज्ञाता० ५८ । भग० ४७४। रथसंगेल्लिः-रथसमुदायः । औप० ७२ । रथसङ्केल्ली रथसमुदयः, (देश्योऽयं शब्दः) । जं० प्र० २६५ ।

रहसाअब्भक्खाण-रहः-एकान्तस्तेन हेतुना अभ्याख्यानं रहोऽभ्याख्यानम् । उपा० ७ ।

रहसिर-रथशिरः-रथाग्रभागः, काकमुखः । जं० प्र० २४६ ।

रहसुत्तं-रहस्यसूत्रं-निशीथादिकम् । बृ० द्वि० १४२ अ ।

रहस्याभ्याख्यानं-स्त्रीपुंसयोः परस्परस्मरेणान्यस्य वा रागसंयुक्तं हास्यक्रीडासंगादिभिः रहस्येनाभिशंसनम् । तत्त्वा० ७-२५ ।

रहस्स-ह्रस्वं-अल्पम् । ठाणा० ४३ । रहस्यं-एकान्तम् । सूत्र० ११० । ह्रस्वस्वरं-लघुशब्दम् । अनु० १३२ । ठाणा० ३९६ । रहस्यं-ऐदम्पर्यम् । भग० ११४ । रहस्यं-एकान्तकृत्यत्वात् । अब्रह्मणस्त्रयोविंशतितमं नाम । प्रश्न० ६६ । एकान्तयोग्यः । भग० ७३९ । ह्रस्वः-ह्रस्ववर्णाश्रयो विवक्षया लघुर्वा वीणादिशब्दवत् । ठाणा० ४७१ । रहस्यः-अपडक्षीणः । राज० ११६ । अपवादपदानि । बृ० तृ० ३६२ आ । अववातो । नि० चू० प्र० १०२ आ । रहस्यं-गुप्तत्वम् । ज्ञाता० १९१ । रहस्यं-एकान्तयोग्यम् । ज्ञाता० ११ ।

रहस्सकड-रहःकृतं-प्रच्छन्नकृतम् । भग० ११७ ।

रहस्सगुज्झ-सति रहस्से वि गुज्झंगं मृगीपदमित्यर्थः रहस्स अरहं जं गुज्झं तं रहस्सगुज्झं । नि० चू० प्र० २९२ आ ।

रहस्सट्ठाणं-गुज्झावरणा जत्थ वा राहस्सियं मंतेति । दश० चू० ७६ ।

रहस्सब्भक्खाण-रहस्याभ्याख्यानं-एकान्तेऽभ्याख्यानं असदभ्यारोपणम् । आव० ८२० ।

रहस्सिय-रहस्यिकम् । आव० ३६७ ।

रहस्सिया-रोहस्यिकी । बृ० प्र० ५९ आ ।

रहाणीयं-रहेहि बलदरिसणा रहाणीय । नि० चू० द्वि० ७१ अ ।

रहावत्त-रथावर्त्तः-पर्वतविशेषः । आव० १७६, ३०४ ।

रहितं-अग्रपादाभ्यामीक्षणं एकपक्षहष्टिसंबन्धो वा । बृ० द्वि० १४ आ ।

रहिय-रहितः-परित्यक्तः । उत्त० ४२८ ।

राअ-राजा-चक्रवर्त्ती । भग० ७०० । भरताधिपः । आव० १५६ । चक्रवर्त्ती-वसुदेवः-बलदेवः-महामण्डलिकश्च । अनु० २३ ।

राइंदिय-रात्रिन्दिवं-रात्रिदिवसप्रमाणम् । सूर्यं० ६१ ।

राइ-धर्मकथायां प्रथमवर्गे द्वितीयमध्ययनम् । ज्ञाता० २४७ । राजा-महामण्डलिकः । ठाणा० ४६३ ।

राइए-रात्रिशब्दोऽप्यहोरात्रवाची । जं० प्र० १५० ।

राइणा-राज्ञा । ओघ० १९८ । आव० ३६७ ।

राइणिओ-रात्निकः-आचार्यः । आव० ६३८ । रात्निकः-आचार्यः, अन्यो वा यो जातिश्रुतपर्यायादिभिर्महान् । आव० ६५४ ।

राइणियपरिभासिय-रात्निकपरिभाषी-यो रात्निकस्य आचार्यस्य जातिश्रुतपर्यायादिभिर्महतोऽन्यस्य वा पराभवकारी । पञ्चममसमाधिस्थानम् । आव० ६५३ ।

राइणिया-पुव्वदिक्खिया सब्भा उवदेसगा वा, जे वा अन्ने पूया । दश० चू० १२४ । आव० ७९३ ।

राइण्ण-राजन्यः-भगवद्वयस्य वंशजः । भग० ११५ । यस्तेनैव वयस्यतया व्यवस्थापितस्तद्वंशजश्च राजन्यः । औप० ९७ ।

राइलओ-रागवान् । आव० २०९ ।

राइन्ना-आदिदेवेनैव-वयस्यतया व्यवहृताः । भग० ४८१ । कुलार्यभेदविशेषः । प्रज्ञा० ५६ । राजन्याः-वयस्यतया व्यवस्थापिताः । जं० प्र० १४५ । राजन्याः-सखिस्थानीयाः । आचा० ३२७ । ये तु वयस्यतयाऽऽचरितास्ते राजन्याः । ठाणा० ३५८ । राजन्याः-भगवद्वयस्यवंशजाः । राज० १२१ ।

राइभत्ते-रात्रिभक्तः-रात्रिभोजनम् । दश० ११६ ।

राइमई-राजीमती-उग्रसेनपुत्री । दश० ९६ ।

राइयं-रात्रिकं-रजनिनिर्वृत्तम् । प्रतिक्रमणविशेषः । आव० ५६३ ।

राइल्लेऊण-रालालिप्तं-सञ्चितं कृत्वा । आव० ४२५ ।

रचियग-रचितकं-मोदकचूर्णादिसाव्वाचार्यं प्राप्य पुनर्मोदकादितया विरचितम् । प्रश्न० १५४ ।
रजउग्घात-रजस्वलादि क्षोयामुसस्तु समन्ततोऽन्धकार इव दृश्यते तत्र पांसुवृष्टौ रजउग्घातो । व्य० द्वि० २४०
रजकनोलिकोत्थ-द्रव्यकोषः । आव० ३९१ ।
रजोहरण-निषद्याद्वयोपेतम् । बृ० प्र० १५० आ । धर्मध्वजः । पिण्ड० ४ ।
रज्ज-राज्यं-प्रभुता । ठाणा० ३४३ । राजादिपदार्थसमुदायः । भग० ६९१ । राष्ट्राधिपत्यरूपम् । उत्त० ४४१ । राज्यम् । ज्ञाता० १३१ । राणयभोत्ती रज्जं । नि० चू० प्र० ८३ अ । एकनृपाज्ञावर्त्ति मण्डलम् । बृ० तृ० ८० अ । यावत्सु देशेषु एकभूपतेराज्ञा तावद्देशप्रमाणमेतेषु यत्र यस्य । बृ० तृ० ८० अ ।
रज्जआ-दोरकोत्ति । नि० चू० प्र० १२१ आ ।
रज्जणता-मणसा पोतिगमणं रज्जणता । नि० चू० द्वि० ७१ आ ।
रज्जवइ-स्वतन्त्रः । भग० ५४२ ।
रज्जसुंक-राज्यप्राप्तव्यम् । ज्ञाता० १३१ ।
रज्जसुक्कः-राज्यशुल्का । आव० ३४४ ।
रज्जह-रज्यत-रागं कुरुत । ज्ञाता० १४८ ।
रज्जियव्वं-रक्तव्यं-रागकार्यः । प्रश्न० १५९ ।
रज्जु-दशनालिकानिष्पन्ना । अनु० १५४ । रज्जुः-रज्जुगणितम् । सूत्र० २६९ । रज्जुः । आव० ५१५ । फलकसङ्घातनदवरिका । ज्ञाता० १५७ ।
रज्जुगणित-सङ्ख्यया भेदः । ठाणा० २६३ ।
रज्जुच्छाया-छायाया भेदः । सूर्य० ९५ ।
रज्जुमती-दोरो । नि० चू० प्र० १२१ आ ।
रज्जू-रज्ज्वा यत्सङ्ख्यानं तद्रज्जुरभिधीयते । ठाणा० ४९६ । रज्जुः । आव० २७३ ।
रज्झइ-राध्यते । आव० २०६ ।
रट्ठ-राष्ट्रं-ग्रामनगरादिसमुदायम् । उत्त० ४४२ ।
रट्ठउड-रट्ठमहत्तरो । नि० चू० प्र० २०९ अ । राष्ट्रकूटः-राष्ट्रमहत्तरः । बृ० द्वि० २१२ आ ।
रट्ठिओ-राष्ट्रिकः । आव० २१९ ।
रट्ठकूड-राष्ट्रकूटः-मण्डलोपजीवी राजनियोगिकः । विपा० ३९ ।
रट्ठथेरा-राष्ट्रे व्यवस्थाकारिणो बुद्धिमन्त आदेयाः प्रभविष्णवस्ते राष्ट्रस्थविराः । ठाणा० ५१६ ।
रट्ठधम्म-राष्ट्रधर्म्मः-देशाचारः । ठाणा० ५१५ ।
रट्ठवद्धण-राष्ट्रवर्धनः-अज्ञातोदाहरणे प्रद्योतात्मजपालकलघुपुत्रः । आव० ६९९ ।
रट्ठिय-राष्ट्रिकः-राष्ट्रचिन्तानियुक्तकः । प्रश्न० ९६ ।
रडइ-रोदिति । आव० ४२० । रटति । आव० ४३२ ।
रडिय-रटितं आरट्टीरूपम् । प्रश्न० १६० ।
रणपट्टगो- । नि० चू० प्र० २४५ आ ।
रण्ण-अरण्यम् । आव० ६७१ ।
रण्णतणं-अरण्यतृणं । तृणपञ्चके पञ्चमो भेदः । आव० ६५२ ।
रण्णिगो-आरण्यकः । आव० ४४७ ।
रत-जीवस्वरूपोपरञ्जनाद्रज इव रजः-कर्म्म । ठाणा० ३१९ । मैथुनम् । सम० १६ । रजः-पापम् । रतं रतिः । रयः-औत्सुक्यम् । प्रश्न० १५७ । ठाणा० ४०६ । आरणो वा उद्धुओ आगओ । नि० चू० तृ० ६९ आ ।
रतणप्पभा-भीमराक्षसेन्द्रस्य चतुर्थी अग्रमहिषी । ठाणा० २०४ ।
रतणसंचया-जम्बूद्वीपप्रमाणा चतुर्थी राजधानी । ठाणा० २३१ ।
रतणसंचय-मानुषोत्तरपर्वते अपरोत्तरस्यां रत्नसंचयकूटम् । ठाणा० २२३ ।
रतणुच्चत-मानुषोत्तरपर्वते दक्षिणापरस्यां दिशि रत्नोच्चयकूटम् । ठाणा० २२३ ।
रतणुच्चता-जम्बूद्वीपप्रमाणा द्वितीया राजधानी । ठाणा० २३१ ।
रति-रतिः-रतं, निधुवनम् । अब्रह्मण एकोनविंशतितमं नाम । प्रश्न० ६६ । चित्तरमणम् । ज्ञाता० १६२ । रतिः-तदवस्थाऽऽसक्तिरूपा । जीवा० १२३ ।
रतिकरगपव्वत-नन्दीश्वरद्वीपे पर्वतः । ठाणा० २३१ ।
रतिकरपर्वत-नन्दीश्वरद्वीपे पर्वतः । ज्ञाता० १२८ ।
रतिकरा-रतिकराः-रतिकरणाद्रतिकराः । ठाणा० २३३ ।

नन्दीश्वरद्वीपे विदिग्व्यवस्थिताः चत्वारश्चतुःस्थानकाभिहितस्वरूपाः पर्वताः । ठाणा० ४८० ।

**रतिकर्म्म**-यदुदयेन सचित्ताचित्तेषु बाह्यद्रव्येषु जीवस्य रतिरुत्पद्यते तत् । ठाणा० ४६९ ।

**रतिघर**-रतिगृहं-क्रीडास्थानम् । आव० ५१ ।

**रतिप्पभा**-किन्नरेन्द्रस्य चतुर्थाऽग्रमहिषी । ठाणा० २०४ ।

**रतिप्रिय**-किन्नरभेदः । प्रज्ञा० ७० ।

**रतियभोती**-ठविय पाहुडियं भुंजति णिक्खित्तभोती वा ठविय भोति घंटिक्करगपरलगादिसु जो य वट्टिय आणेउं भुंजति सो रतियभोती । नि० चू० द्वि० ९१ अ ।

**रतिरुद्ध**-अंजलि । नि० चू० द्वि० १२० आ ।

**रतिश्रेष्ठा**-किन्नरभेदः । प्रज्ञा० ७० ।

**रतिसेणा**-किन्नरेन्द्रस्य तृतीयाऽग्रमहिषी । ठाणा० २०४ । कन्नरस्याग्रमहिषी । भग० ५०४ ।

**रती**-रतिः-इह विषयगता गृह्यते, सा पुनर्ललना अवगूहनादिका, तथाभूतोऽप्यवजुगुप्सुः स्त्रीभिरभिधीयते । आचा० १०६ । रतिः-रतिहेतुत्वात् । अहिंसायाः सप्तमं नाम । प्रश्न० ९९ । ठाणा० ४०६ । रतिः-कामरागः । प्रश्न० १३८ । रम्यते अस्यामिति रतिः-स्पर्शनादिसम्भोगजनिता चित्तप्रल्हत्तिः । उत्त० २४३ ।

**रत्तंसुअ**-रक्तांशुकः-मशकदंशादिनिवारणार्थंकमशकगृहाभिधानवस्त्रविशेषः । जं० प्र० २८५ ।

**रत्तंसुय**-रक्तांशुकं-अतिरमणीयं रक्तं वस्त्रम् । जीवा० २१० । रक्तांशुकं-मशकगृहाभिधानो वस्त्रविशेषः । सूर्य० २९३ । अतिरमणियं वस्त्रम् । जं० प्र० ५५ ।

**रत्त**-रक्तः-संमर्दितः । जं० प्र० २१२ । अहोरात्राः । उत्त० ५३७ । गेयरागानुरक्तेन यत् गीयते तत् । जं० प्र० ४० । लोहितम् । भग० १० । रक्तं-तिरोहितम् । सूर्य० २६४ । रक्तं-गेयरागानुरक्तेन यद्गीयते तत् । जीवा० १९४ । रक्तः । भग० ५७७ । रक्तः-तिरोहितः । सूर्य० २३४ । रक्तं-गेयरागेणानुरक्तः । ठाणा० ३९६ ।

**रत्तकंबलसिला**-रक्तकम्बलशिला-अभिषेकशिलाया नाम । जं० प्र० ३७२ ।

**रत्तकंबलासिलाओ**- । ठाणा० ८० ।

**रत्तकणवीर**-रक्तकणवीरम् । आव० ६८१ ।

**रत्तकणवीरए**-रक्तकणवीरः । प्रज्ञा० ३६१ ।

**रत्तगंड**-रक्तौ-रञ्जितौ गण्डौ यैस्तानि रक्तगण्डानि । ज्ञाता० १५८ ।

**रत्तचंदण**-रक्तचन्दनम् । आव० ६८१ ।

**रत्तच्छ**-रक्ताक्षी-अशिवकारिण्या विशेषणम् । ओघ० १७ ।

**रत्तणिक्खेत्त**-रजनिक्षेत्रम् । सूर्य० ११, १२ ।

**रत्तपड**-रक्तपटः-परिव्राजकः । ज्ञाता० १९३ ।

**रत्तपडवेस**-रक्तपटवेषः । आव० ४२१ । नंदी० १५७ ।

**रत्तपडा**-पुव्वपच्छसंथुतो । नि० चू० प्र० १४७ अ । सक्का । नि० चू० द्वि० ९८ अ ।

**रत्तपाओ**-रक्तपादः-महापुरस्य रक्ताशोकोद्याने यक्षः । विपा० ९५ ।

**रत्तबंधुजीव**-रक्तबन्धुजीवः । प्रज्ञा० ३६१ ।

**रत्तबंधुजीवय**-रक्तबन्धुजीवकं-लोहितबन्धुकम् । अन्त० ९ ।

**रत्तरयण**-रक्तरत्नं पद्मरागादि । भग० १६३ । प्रश्न० १३४ । रक्तरत्नम् । आव० ५२ ।

**रत्तवई**-रक्तवती महापुरे बलराजस्य कन्या । विपा० ९५ । रक्तवती-महापुरे दत्तराज्ञी । विपा० ९५ । रक्तावती-नदीविशेषः । जं० प्र० ३८१ ।

**रत्तवईकूड**-रक्तावत्यावर्तनकूटम् । जं० प्र० ३८१ ।

**रत्तवडोवासग**-रक्तपटोपासकः । आव० ३०७ ।

**रत्तसिला**-रक्तशिला-अभिषेकशिला । जं० प्र० ३७२ ।

**रत्ता**-रक्ता-नदीविशेषः । जं० प्र० ३८१ ।

**रत्तासोग**-रक्ताशोकं-महापुरनगरे उद्यानम् । विपा० ९५ । रक्ताशोकः । प्रज्ञा० ३६१ ।

**रत्ति**-रात्रिः । उत्त० १३६ ।

**रत्तिया**-रक्तिका-गुञ्जा । जं० प्र० ३४ ।

**रत्तुप्पल**-रक्तोत्पलवद्रक्तः । ज्ञाता० ६४ । रक्तोत्पलम् । प्रज्ञा० ३६१ ।

**रत्था**-रथ्या-राजमार्गः । जं० प्र० १८८ । रथ्या-वीथिः । ओघ० ९९, १९८ । सेरिका । ६०५ ।

**रत्थामुह**-रथ्यामुखं-रथ्याप्रवेशः । आव० १३६ ।

रत्नकाण्ड-षोडशविधरत्नमयं षोडशसहस्रबाहल्यम्। सम० ८८।

रत्नचन्द्रः- । जं० प्र० ५४५।

रत्नपुर-अनिसृष्टद्वारविवरणे माणिभद्रादीनां नगरम्। पिण्ड० १६३।

रत्नशेखर-रत्नपुरनगरे राजा। सूत्र० ४१३।

रत्नसारकुमारः- । जं० प्र० ३२७।

रत्नाकराः-शुद्धाधाकर्मवर्ज्यगवेषणायां सूरयः। पिण्ड० ७५।

रत्नाधिकम्- । आव० २१९।

रत्नावलि-तपविशेषः। व्य० प्र० ११३ आ। रत्नावलिः-द्वीपः समुद्रोऽपि च। आभरणविशेषः। प्रज्ञा० ३८७।

रथमुशल-चेटककोणकयोर्युद्धे संग्रामः। व्य० द्वि० ४२६ अ।

रथवीरपुर-शिवभूतिनाम राजसेवकवास्तव्यं नगरम्। विशे० १०२०।

रथसंगिणेल्ली-रथमाला। ज्ञाता० ५९।

रथानीक-सप्तानीकेषु तृतीयम्। जीवा० २१७।

रथावर्त्तपर्वत-वज्रस्वामिनः पादपोपगमनस्थानम्। आचा० ४१९।

रथ्या-आपणवीथिः। जीवा० १४६।

रधंतिया-रन्धयन्तिका-ओदनस्य पाचिका। ज्ञाता० ११७।

रन्न-अरण्यतृणम्। ठाणा० २३४। राजा, राजनाद् दीपनात् शोभावत्वाद् आराध्यत्वाद् वा राजा। ठाणा० १९८। अरण्यम्। प्रश्न० १११।

रन्निग-अरण्यकः-अरण्यवासी। प्रज्ञा० ११२।

रप्फुक- । बृ० प्र० २१२ आ।

रप्फुक-दुष्ट्रव्रणः। बृ० बृ० ७२ अ।

रप्फुग-दुट्ठव्वणो। नि० चू० प्र० ११४ आ।

रप्फो-तीतो। नि० चू० प्र० ४३ अ।

रमइ-रमते-रतिमाबध्नाति। जीवा० २०१।

रमए-रमते-अभिरतिमान् भवति। उत्त० ६१।

रमण-भर्त्ता। ज्ञाता० १६५। भर्त्ता, लावकादिखेड्डम्। आव० ३४६। कुर्कुटादिक्रीडात्मकम्। उत्त० १५१।

रमणओ-रमणकः। आव० ९३।

रमणिज्ज-लान्तककल्पे विमानविशेषः। सम० १७। रमणीयो विजयः। जं० प्र० ३५२।

रमणिज्जा- । ठाणा० ८०।

रमति-रमते-धृतिं कुर्वंति। आचा० ७८। रमति-रतिं कुर्वंति। ज्ञाता० २३२।

रमिज्जा-रमेत-वर्तेत। दश० २४५।

रम्म-रम्यो विजयः। जं० प्र० ३५२। रम्यः। ज्ञाता० ७८। लान्तककल्पे विमानविशेषः। सम० १७।

रम्मग-लान्तककल्पे विमानविशेषः। सम० १७। रम्य-कूटं-रम्यकक्षेत्राधिपदेवकूटम्। जं० प्र० ३८०। रम्यको विजयः। जं० प्र० ३५२।

रम्मगकूड-रम्यककूटं-रम्यकक्षेत्राधिपकूटम्। जं० प्र० ३७७।

रम्मगवासा-रम्यक्वर्षः, अकर्मभूमिविशेषः। प्रज्ञा० ५०।

रम्मगा- । ठाणा० ८०।

रम्मयवास-रम्यक्वर्षं-महाहिवन्निषधयोरन्तराले वर्षम्। ठाणा० ६८।

रम्मा- । ठाणा० ८०।

रम्यक-नीलवर्षधरपर्वते अष्टमं कूटम्। ठाणा० ७२। रुक्मि-वर्षधरपर्वते तृतीयं कूटम्। ठाणा० ७२।

रय-रजः-बध्यमानकं कर्म। आव० ४०६। रजः-निसर्ग-निर्मलजीवानुरञ्जनाद् रजः-कर्म। आव० ४३८। रयः-वेगः चेष्टाऽनुभवः फलं वा। आव० ४३६। रजः-जीवस्वरूपोपरञ्जनात्कर्म ज्ञानावरणादि। प्रश्न० ९८। रज्यते अनेन स्वच्छस्फटिकवच्छुद्धस्वभावोऽप्यात्माऽन्यथा-त्वमापाद्यत इति रजः-कर्मबध्यमानकं बद्धं च। उत्त० १८५। वातोत्पाटितं व्योमवर्त्ति। भग० ६६५। रजः-वातोत्खातम्। प्रश्न० ५९। रजः-रेणुः। जीवा० २७७। रजः-बध्यमानं बद्धं ईर्यापथं वा कर्म। आव० ५०७। रजः-पृथिवीरजः। आव० ५७६। वातोत्खातमाकाश-वर्ति रजः। सम० ६१। रतः-अनुद्वेगवान्। दश० ७१। रजः-आरण्यपांशुः। दश० १५२। रजोहरणम्। ओघ० १११। श्लक्ष्णतरा रेणुपुद्गला रजः। राज० १८। धूमागारो आपांडुरो। नि० चू० तृ० ७० अ। रजः-

कर्म। उत्त० ३३५। रजः-सचित्तपृथिवीकायः। ओघ० २१५। रजः-वध्यमानं कर्म्म। नंदी० ४१। रतं-स्त्र्यादिभिः सह विषयानुभवनम्। उत्त० ४२६। रयः-वेगः। उत्त० ५०८। आव० ६०२। रयः-संक्रमणोद्वर्त्तनापवर्तनादियोग्यम्। व्य० प्र० २५५।

**रयउग्घाए**-विश्रसापरिणामतः समन्ताद्रेणुपतनं रज उद्घातो भण्यते। ठाणा० ४७६। रज उद्घातः-रजस्वलादिक्। जीवा० २८३। (?) १८५।

**रयए**-रजतकूटं, इदं चान्यत्र रुचकमिति प्रसिद्धम्। जं० प्र० ३३७।

**रयग**-वत्थसोहगो। नि० चू० द्वि० ४३ आ।

**रयगहर**-रजकगृहम्। आव० ६९२।

**रयगसेणी**-रजकश्रेणिः। आव० ६९२।

**रयणं**-रत्नं-कर्केतनादि। प्रज्ञा० ९७। भग० १६३। प्रश्न० ३८। रत्नं-इन्द्रनीलादि। जीवा० १६४। रत्नम्। सूर्य० २६१। रत्नं-इन्द्रनीलादि, जलसमुद्भवं वा। आव० २३०। रत्नः-रत्नमयः। आव० २३१। रत्नम्। आव० ४०७। वज्रवैडूर्यादि। प्रज्ञा० ४३। कर्केतनादिरत्नः। ज्ञाता० ३१। रजतः। ज्ञाता० ३५। जलजातं रत्नम्। जं० प्र० २४। रमन्ते रज्यन्ते ग्राहका येभ्यः सल्लक्षणेभ्यस्तानि रत्नानि। जं०प्र० १४२। रत्नम्। दशा० १६३। मानुषोत्तरपर्वते दक्षिणपूर्वस्यां दिशि रत्नकूटम्। ठाणा० २२३। रत्नं-मनुष्यजातावुत्कृष्टत्वात् रजनो वा रञ्जकः। भग० ४६८। रत्नम्। आव० ८२६।

**रयणकंड**-रत्नकाण्डं-प्रथमं काण्डं-रत्नानां विशिष्टो भूभागः। जीवा० ८९।

**रयणकरंडए**-रत्नकरण्डकः। जीवा० २३४।

**रयणकरंडग**-रत्नकरण्डकः। जं० प्र० ४१०।

**रयणदीव**-रत्नद्वीपः-आहारैषणाविवरणे वणिग्दृष्टान्ते द्वीपः। दश० १९।

**रयणदेवता**- । नि० चू० तृ० ५ आ।

**रयणद्दीव**-द्वीपविशेषः। ज्ञाता० १५७।

**रयणद्दीवदेवया**-रत्नद्वीपे देवी। ज्ञाता० १५७।

**रयणपंजर**-रत्नपञ्जरः-रत्नसमुदायः। जं० प्र० २९८।

**रयणपुर**-रत्नपुरं-धर्मनाथजन्मभूमिः। आव० १६०। रत्नपुरं-रत्नशेखरराजधानी। सूत्र० ४१३।

**रयणप्पभा**-रत्नानां प्रभा-दीप्तिर्यस्यां सा रत्नप्रभा-प्रथमा पृथिवी। भग० ६८। रत्नानां प्रभा-ज्योत्स्ना यस्यां सा रत्नप्रभा। अनु० ८१। रत्नप्रभा-रत्नबाहुल्या पृथिवी। जीवा० ८९। रत्नानि प्रभा-स्वरूपं यस्याः सा रत्नप्रभा-रत्नबहुला, रत्नमयी। प्रज्ञा० ४३। भीमराक्षसेन्द्रस्य चतुर्थी अग्रमहिषी। भग० ५०४। रत्नप्रभा-रत्नैर्वा प्रभाति-शोभते या सा। ठाणा० ५२५।

**रयणमाला**-रत्नमाला-रत्नशेखरराजस्याऽग्रमहिषीः। सूत्र० ४१३।

**रयणवई**-रत्नवती-यक्षहरिलस्य तृतीया सुता-ब्रह्मदत्तराज्ञी। उत्त० ३१९।

**रयणवडंसए**- । भग० २०३।

**रयणवाणियओ**-गिरिणगरे रत्नवणिक्। आव० ५२।

**रयणवासा**-रत्नवर्षः-रत्नवर्षणम्। भग० १९९।

**रयणविचित्त**-रत्नविचित्रं-रत्नखचितम्। आव० ५०४, ५०५।

**रयणवुट्ठी**-रत्नवृष्टिः। भग० १९९।

**रयणसंचया**-रत्नसञ्चया-उत्तरपश्चिमरतिकरपर्वतस्योत्तरस्यामीशानदेवेन्द्रस्य वसुन्धरायाः अग्रमहिष्या राजधानी। जीवा० ३६५। रत्नसञ्चया नगरी। जं० प्र० ३५२।

**रयणसंचयाओ**- । ठाणा० ८०।

**रयणसिरी**-रत्ननामगाथापतेर्भार्या। ज्ञाता० २५१।

**रयणा**-रत्ना-उत्तरपश्चिमरतिकरपर्वतस्य पूर्वस्यामीशानदेवेन्द्रस्य वसुनामिकाया अग्रमहिष्या राजधानी। जीवा० ३६५। ठाणा० २३१। रचना-नामादिविन्यासलक्षणा। आव० ४७२। नि० चू० प्र० ३४ अ।

**रयणाइं**-रत्नानि-तत्तज्जातिप्रधानवस्तूनि। जं० प्र० १९७।

**रयणागर**-रत्नाकरः। ज्ञाता० २२८। रत्नाकरः-रत्नानां खनिः। भग० १९९।

**रयणाभ**-रत्नानां-वैडूर्यादीनामाभानमाभास्वरूपतः प्रतिभासनमस्यामिति रत्नाभा। उत्त० ६९७।

**रयणामए**-रत्नमयः-अन्तर्बहिरपि रत्नखचितः। जं० प्र०

राइस्सिउ-राजाश्रितः । नि० चू० द्वि० २५ अ ।

राई-राज्ञः-चक्रवर्त्यादिः । ठाणा० १७२ । धान्यविशेषः । नि० चू० द्वि० १२० अ । आमलकल्पायां गाथापतिः । ज्ञाता० २५०. । रातीगाथापतेर्दारिका । ज्ञाता० २५० । राजानो-मण्डलिकाः । राज० १२१ । राजी । राज० ११२ ।

राईण-राजानः-क्षत्रियेभ्योऽन्ये । आचा० ३३४ ।

राईणिया-राजानः-तत्कल्पा ईश्वरादयो वा । सूत्र० ७१ ।

राईतिहो-यस्तु पश्चार्द्धभागः स रात्रितिथिः । सूर्य० १४६ ।

राईसिरी-रातीगाथापतेर्भार्या । ज्ञाता० २५० ।

राईहितो-राजभ्यः । आव० ३४४ ।

राउल-राजकुलम् । आव० ९९ । ओघ० १५२ । आव० २९७ ।

राउलओ-राजकुलगः । आव० ८९ ।

राउलग-राजकीयः । वृ० प्र० २७ आ ।

राउला-राजकीया । ओघ० १४० ।

राउलिय-राजकुलिकम् । उत्त० ११६ । राजकुलीनः । आव० ५५८ । राजकुलीयः-राजकुलसम्बन्धी । दश० ४५ ।

राओ-सन्ध्या विकालविभुता रात्रिर्वा । वृ० द्वि० ९२ आ । संज्ञा । नि० चू० प्र० १९३ अ ।

राओलं- । नि० चू० द्वि० १६९ आ ।

राओवरयं-रात्र्युपरतम् । उत्त० ४१४ । रागः-अभिष्वङ्गः उपरतः निवृत्तो यस्मिंस्तत् रागोपरतम् । उत्त० ४१४ । रात्रोपरात्रम्-अहर्निशम् । आचा० ३१३ ।

राक्षसराक्षसाः-राक्षसभेदविशेषः । प्रज्ञा० ७० ।

राग-रागः-रञ्जकरसः । ठाणा० २१९ । रक्तता । जीवा० १७३ । रूपाद्युपजनितः प्रीतिविशेषः । आव० २७२ । रागः-रागानुभूतिरूपत्वादस्य अप्रशस्तो विनतितमं नाम । प्रश्न० ९६ । रागः-पित्रादिषु स्नेहरागः । प्रश्न० १२७ । रागः-स्नेहरागः । प्रश्न० १२८ । रागः-रक्तता । प्रज्ञा० ९६ । रागः-अभिष्वङ्गलक्षणः । आव० ८४८ । रागः-रूपादिगुणाहृतचेतसः । विशे० ८४७ (?) । कम्मजणितो ओवभावो रागो । नि० चू० द्वि० ७ अ । अभिष्वङ्गलक्षणः । आव० ६९७ ।

रागझञ्झा-इष्टविषयावाप्तौ रागझञ्झा । आचा० १७० ।

रागद्दोसतुलग्ग-रागद्वेषयोस्तुलाग्रमिव तदनभिभाव्यत्वेन रागद्वेषतुलाग्रम् । उत्त० ११५ ।

रागद्दोसभयाईयो-रागश्च-प्रतिबन्धात्मको द्वेषश्च-अप्रीतिरूपो भयं च इहलोकभयादि रागद्वेषभयानि तान्यतीतो-निष्क्रान्तः रागद्वेषभयातीतो-रागादिरहितः । उत्त० ५२७ ।

रागभावितमूर्ति-अभिष्वङ्गलक्षणरागरक्तः । आव० ५८५ ।

रागरत्त-अभिष्वङ्गलक्षणो रागस्तेन रक्तः-तद्भावितमूर्तिः रागरक्तः । आव० ५८५ ।

रागगिह-रायगृहं-जरासंघराजधानी । प्रश्न० ७५ ।

राजगृह-नगरविशेषः । भग० ५ । प्रसेनजनितराजधानी । नंदी० १५१ । भगवत्समवसरणस्थानम् । विशे० ६११ । महावीरविहारभूमिः । वृ० प्र० १६६ अ ।

राजचम्पक वरचम्पकः । जं० प्र० १८३ ।

राजनियुक्त-राजाज्ञापालकः । नंदी० १५१ ।

राजपट्टः- । अनु० २१४ ।

राजभाग-राजाभाव्यद्रव्यापह्नवः । प्रश्न० ५८ ।

राजमन्दः- । उत्त० १२० ।

राजयक्ष्म-रोगविशेषः । ठाणा० ४४७ ।

राजवर्णवान्-राजभटः । विपा० ६३ ।

राजवेष्टिकल्पः- । दश० १०६ ।

राजहंसो-महौषधीविशेषः । जं० प्र० ४११ ।

राजाण-राजा । आव० १७२ ।

राजावग्रहः-अवग्रहस्य द्वितीयो भेदः । आचा० १३४ । भरताधिपावग्रहः । आव० १२६ ।

राजि-भृगुः । ओघ० १३७ ।

राटी-राटिः-कलहः । भग० ८० । राटी-कलहः । उत्त० १०० ।

राढा-अदत्ता । व्य० द्वि० २७८ आ । विभूषा । दश० २०६ ।

राढामणी-काचमणिः । उत्त० ४७८ ।

राण-राजः । भग० ७३६ ।

रातिदिवग्ग-रात्रिन्दिवाग्रं-रात्रिन्दिवपरिमाणम् । सूर्य० ११ ।

रातिणि-अपरिभावी रात्निकपरिभाषी-आचार्यादिपूज्य-पुरुषपराभवकारी, पञ्चममसमाधिस्थानम्। सम० ३७।

रातिणिय-रत्नैः-ज्ञानादिभिर्व्यवहरतीति रात्निकः-बृहत्पर्यायो ज्येष्ठो वा। ठाणा० ३०१।

राती-राजिः-रेखा। ठाणा० २३५। ईशानेन्द्रस्य द्वितीयाऽग्रमहिषी। ठाणा० २०४। राजिः-पद्धतिः। प्रश्न० ८३। संज्ञा। नि० चू० प्र० २६५ आ। रात्री-रज्जत इति रात्री, स एव रागस्वभाव्या उभयोरपि विद्यते। नि० चू० तृ० १४० अ।

रात्रीभोजनम्-तृतीयः शबलः। प्रश्न० १४४।

रात्रौ- । आचा० ३३१।

राद्धान्तोपन्यासः- । आचा० ४७।

रामसिया- । व्य० प्र० २२४ अ।

राम-रामः-नवमबलदेवः। आव० १५६। रामः-वसुदेवज्येष्ठसुतः। उत्त० ४८९। रामः-तापसोपुत्रः परशुरामः। आव० ३९२। ज्ञाता० २५३। रामः-। नंदी० २१८।

रामकण्हा-अन्तकृद्दशानामष्टमवर्गस्याऽष्टममध्ययनम्। अन्त० २५, ३०। प्रथमवर्गेऽष्टममध्ययनम्। निरय० ३।

रामकेसीणं-रामकेशवाभ्याम्। पञ० २६।

रामकेसीहिं-रामकेशवाभ्याम्। पञ० १०-२४।

रामगुत्त-रामगुप्तः-राजर्षिः, योऽशनादिकं भुञ्जान एव सिद्धिं प्राप्तः। सूत्र० ९५।

रामदेव-अयोध्याधिपतिदशरथराजपुत्रः पद्मापरनाम। प्रश्न० ८७।

रामपुत्त-अनुत्तरोपपातिकदशानां तृतीयवर्गस्य पञ्चममध्ययनम्। अनुत्त० २।

रामरक्खिया-धर्मकथायां दशमवर्गेऽध्ययनम्। ज्ञाता० २५३। ईशानदेवेन्द्रस्य चतुर्थाऽग्रमहिषी। भग० ५०५।

रामरक्खियात-जम्बुद्वीपप्रमाणा राजधानी। ठाणा० २३१।

रामरक्षिता-ईशानदेवेन्द्रस्य चतुर्थ्याऽग्रमहिषी। जीवा० ३६५।

रामा-धर्मकथायां दशमवर्गेऽध्ययनम्। ज्ञाता० २५३। ईशानदेवेन्द्रस्य तृतीयाऽग्रमहिषी। जीवा० ३६५। भग० ५०५। सुविधिनाथमाता। सम० १५१। आव० १६०। जम्बुद्वीपप्रमाणा राजधानी। ठाणा० २३१।

रामावि- । नंदी० २१८।

रायंसी-राजांसी-राजयक्ष्मा सोऽस्यास्तीति राजांसी, क्षयी। आचा० २३३।

राय-रागः-विषयाभिष्वङ्गः। दश० ८६।

रायकरंडग-राजकरण्डकः-अमूल्यरत्नादिभाजनत्वात्सारतम इति। ठाणा० २७२।

रायकरण-न्यायालयम्। नि० चू० तृ० १०१ अ।

रायकहा-राज्ञः-नृपस्य कथा राजकथा। ठाणा० २०१। राज्ञः सम्बन्धी कथा राजकथा। आव० ५८१। राज्ञः-अमुकशोभन इत्यादिका। दश० ११४।

रायकेर-राजकीयः। ओघ० ६७।

रायगिर- । व्य० द्वि० १६६ अ।

रायगिहं-राजगृहं-जितशत्रुनगरम्। आचा० ७५। राजगृहं-श्रेणिकराजधानी। सूत्र० ४०७। आव० ६५, १६६। राजगृहं-भगवत्यां द्वितीयशतके पञ्चमोद्देशकेऽग्रहृदप्रश्ने नगरम्। भग० १४१। राजगृहं-विकुर्वणाऽधिकारे नगरम्। भग० १९३। राजगृहं-श्रेणिकराजधानी। अनुत्त० ७,८, १८, २३। भग० ३७९, ५०२। राजगृहं-नगरविशेषः। अन्त० २३। राजगृह-मगधजनपदे आर्यक्षेत्रविशेषः। प्रज्ञा० ५५। राजगृहं-नगरविशेषः। भग० १०६। राजगृहं-स्कन्दकचरित्रे नगरम्। भग० ११२, १२६। राजगृहं-नगरम्। भग० १३९। राजगृहं-ईशानेन्द्रस्य वैक्रियरूपकरणतेजोलेश्यासामर्थ्योपदर्शने नगरम्। भग० १६०। राजगृहं-असुरकुमाराणां गतिशक्तिप्ररूपणायां नगरम्। भग० १६६। राजगृहं-चमरोत्पातक्रियानिरूपणे नगरम्। भग० १८१। राजगृहं-योनिप्रभृतिवक्तव्यतायां नगरम्। भग० ३०३। राजगृहं-आयुष्कादिनिरूपणे नगरम्। भग० ३०४। राजगृहं-परमतनिरासे नगरम्। भग० ३२३। राजगृहं-इन्द्राणां लोकपालनिरूपणे नगरम्। भग० १९४। राजगृहं-असुरकुमाराणां देववक्तव्यतायां नगरम्। भग० २००। राजगृहं-दिक्षु वातप्रतिपादने नगरम्। भग० २११। राजगृह-संसारिणः शाश्वतादिस्वरूपनिरूपणे नगरम्। भग० ३०२, ७३१, ७३६,

लद्धिवीरियं-जो पुण संसारी जीवो अपज्जत्तगो ठाणातिसत्तिसंजुत्तो तस्स तं । नि० चू० प्र० १९ अ ।

लद्धी-लब्धिः-शक्तिमात्रम् । आचा० ६७ । प्राप्तिः । भग० ८१३ । केवलज्ञानादिलब्धिनिमित्तत्वाल्लब्धिः । अहिंसायाः सप्तविंशतितम नाम । प्रश्न० ९९ । लब्धिः-तत्तदावरणकर्मक्षयोपशमरूपा । प्रज्ञा० ३०९ ।

लद्धीअक्खर-योऽक्षरस्योपलम्भो लाभः सा लम्भनं लब्धिः-तल्लक्षणमक्षरमित्यर्थः । यः श्रुतज्ञानोपयोगः यच्च तदावरणकर्मक्षयोपशमः एतौ द्वावपि लब्ध्यक्षरम् । विशे० २५७ ।

लद्धुं-लब्ध्वा । उत्त० १८५ । आचा० १२९ ।

लद्धेल्लिआ-लब्धपूर्वा । आव० १७३ ।

लन्द-उदकार्द्रः करो यावता शुष्यति, तत आरभ्योत्कृष्टतः पञ्च रात्रिन्दिवानि यावत्कालोऽत्र समयपरिभाषया लन्दमित्युच्यते । विशे० १४ । लन्दः-कालः । बृ० प्र० २२९ अ ।

लपण-लपनं-वल्लसकृदालपनम् । दश० ११६ ।

लपनश्री-घृतशर्कराप्रचुरं पक्वान्नम् । पिण्ड० १३९ ।

लब्धप्रतिभ-परवाद्युत्तरदानसमर्थः । आचा० २ ।

लब्धि-ज्ञानदर्शनावरणीयक्षयोपशमरूपा यत्सन्निधानादात्मा द्रव्येन्द्रियनिर्वृत्तिं प्रति व्याप्रियते । आचा० १०४ । भावेन्द्रियभेदः । भग० ८७ । आत्मनो ज्ञानादिगुणानां तत्तत्कर्मक्षयादितो लाभः । भग० ३५० । श्रोत्रेन्द्रियादिविषयस्तदावरणक्षयोपशमः । जीवा० १६ ।

लब्धिपर्याप्त- । प्रज्ञा० २६ ।

लब्ध्यक्षरं-योऽक्षरोपलम्भस्तत् । आव० २४ ।

लब्ध्यपर्याप्तकाः-येऽपर्याप्तिका एव सन्तो म्रियन्ते ते लब्ध्यपर्याप्तकाः । प्रज्ञा० २६ । येऽपर्याप्तका एव म्रियन्ते ते । जीवा० १० ।

लब्भा-कल्पते । आव० ५३० । उपलभ्येत । ओघ० २२६ ।

लभई-लभते-भवत्याभाव्यम् । ओघ० १५५ ।

लभियाणवि-लब्ध्वाऽपि । उत्त० ४७७ ।

लम्बकं- । प्रज्ञा० ४७३ ।

लम्बनोत्क्षेर ईर्यापथप्रतिक्रमणाद्युत्तरकालम् । आव० ५७७ ।

लयंत-सुष्टु । आव० ७२० । आददानः । उत्त० ३०४ ।

लय-लयः-लीनता, तिरोभावः । विशे० १०६२ । लता-अशोकलतादिः । जं० प्र० १६८ । लता-कम्बा । जं० प्र० २३५ । लयः-तन्त्रीस्वनविशेषः । दश० ८८ ।

लयण-लयनं-गृहादिकमाश्रयः । सूत्र० ३०१ । लयनं-शिलामयगृहम् । प्रश्न० ५२ । लयनं-स्थानं वसतिरूपम् । दश० २३६ । लयनं-गृहम् । जं० प्र० ३२१ । लयनं-उत्कीर्णपर्वतगृहं गिरिगुहा वा, कार्पटिकाद्याश्रयस्थानं वा । अनु० १५९ ।

लयन-गुहा । उत्त० ४१३ । जीवा० २६६ ।

लयसम-शृङ्गदार्वाद्यन्यतरमयेनाङ्गुलिकोशकेनाहतायास्तन्त्र्याः स्वरप्रकारो लयस्तमनुसरतो गातुर्यद्गेयं तद् । ठाणा० ३९६ । तन्त्रीस्वरप्रकारो लयस्तमनुसरता स्वरेण यद् गीयते तद् । अनु० १३२ । चउत्थं नट्टं । नि० चू० तृ० १ अ ।

लयसुसंप्रयुक्त-शृङ्गदारुदन्तादिमयो योऽङ्गुलिकोशकस्तेनाहतायास्तन्त्र्याः स्वरप्रकारो लयस्तमनुसरद् गेयम् । जं० प्र० ४१ ।

लया-येषां स्कन्धप्रदेशे विवक्षितोर्ध्वशाखा व्यतिरेकेणान्यत् शाखान्तरं तथाविधं परिस्थूरं न निर्गच्छति सा लता । जीवा० २६ । लता-तिर्यक्शाखा । जीवा० १८२ । लता-पद्मादिका । जं० प्र० ४१७ । लता-वल्ली । कायोत्सर्ग दोषविशेषः । आव० ७९८ । लता तिर्यक्शाखाप्रसाराभावात् । जं० प्र० २५ । लता । सम० १२६ । सूत्र० ३१२ । लता-अशोकलतादिः । भग० ३०६ । लता-कम्बा । प्रश्न० ५७, १६४ । जं० १४७ । लता-तनुका । औप० ६ । लता-चम्पकलतादिः । जीवा० २६ । लता-अशोकलतादिः । ज्ञाता० ७८ । लता-कम्बा । ज्ञाता० ८६ । सहकारलतादिः । ज्ञाता० ३३ । ज्ञाता० ६५ ।

लयाजुद्ध एकोनषष्ठीका । ज्ञाता० ३८ ।

लयायुद्ध-योधयो यथा लता वृक्षमारोहन्ती आमूलमाशिरस्तं ववेष्टि तथा यत्र योधः प्रतियोध श(रो)रं गाढं निपीड्य भूमौ पतति तद् लतायुद्धम् । जं० प्र० १३९ ।

ललइ-ललति-मनईप्सितं यथाभवति तथा वर्त्तते । जीवा० २०१ ।

ललति-मनईप्सितं यथाभवति तथा वर्त्तते । जं० प्र० ४६ ।

ललाट-भालम् । आचा० ३८ ।

ललिअ-ललितम् । आव० १७२ । ललितः मनोज्ञचेष्टाकलितः । जं० प्र० १'५ । ललित-प्रसन्नता । जं० प्र० २२४ । ललितं-पाशकादिक्रीडा । संप्राप्तकामस्य पञ्चमो भेदः । दश० १९४ ।

ललिअमित्त-ललितमित्रः-दत्तवासुदेवपूर्वभवः । आव० १६३ ।

ललिइंदिय-ललितेन्द्रियः-गर्भेश्वरः, राजपुत्रादिः । दश० २४९ ।

ललिइंदिया-आगन्भाउ ललियाणि जेसिं ते, अच्चंतसुहितत्ति । दश० चू० १२६ ।

ललिए-ललितः-सुदर्शनबलदेवपूर्वभवः । आव० १६३ ।

ललित-इट्ठं । नि० चू० प्र० १५८ आ ।

ललियंग-ललिताङ्गः-ईशानदेवलोके इन्द्रः । आव० ११५ ।

ललियंगअ-ललिताङ्गकः-ईशाने श्रीप्रभे विमाने ऋषभदेवपूर्वभवः । आव० १४६ ।

ललिय-ललितं-प्रसन्नता । औप० १३ । ललितं-सलीलगतिः । जं० प्र० ४१६ । ललितं-श्रुतिसुखम् । जं० ५२८ । ललितं-प्रसन्नता । ज्ञाता० २५ । ललित-ईप्सितम् । १६८ ।

ललियघडा-जल्बूदिता मुनयः । सं० ।

ललियमित्त-सप्तमवासुदेवस्य पूर्वभवनाम । सम० १५३ ।

ललिया-क्रीडाप्रधाना । ज्ञाता० २०५ । अन्त० १९ । अकुटिलरूपम् । व्य० प्र० २६० आ । ललिता-दुर्ललितगोष्ठी । भुजङ्गसमुदायः । अन्त० १९ ।

ललियागोट्ठी-ललितागोष्ठी-उदयो मारणान्तिक इति विषये गणिका । आव० ७२३ ।

ललियासणिओ-इष्टासनभोजनपरिवेषिकः द्विभागश्च घटायां बृ० द्वि० १९० आ । अविधिपुरः कर्मवारकः । अविधिना पुरः कर्मकारिणीं वारयति तदा ललितासनिकः । बृ० प्र० २८५ अ ।

लल्ल-लल्लः-अव्यक्तः । प्रश्न० ४१ ।

लल्लक-नरकावासविशेषः । भक्त० । सीतपडंतं ण सहंति । नि० चू० तृ० ३५० (?) ।

लल्लिव्याकरण-बलरक्षनम् । दश० १८६ ।

लवंग-तंबोलपत्तसहिया खायइ तं । नि० चू० द्वि० ६० अ । लवङ्गं-फलविशेषः । जीवा० १३६ । प्रश्न० १६२ ।

लवंगरुक्ख- । भग० ८०३ ।

लवंगविट्ठु-दाणफल अप्पणा कहेति कहावेता जो पादं उप्पादेति एयं । नि० चू० प्र० १४१ आ ।

लवंगुरुक्ख-वलयविशेषः । प्रज्ञा० ३३ ।

लव-एकोनपञ्चाशदुच्छ्वासप्रमाणः । ३४५ । सप्तप्राणनिष्पन्न एकः स्तोकस्तैः सप्तभिः । अनु० १७९ । कर्म० । सूत्र० ६६ । सप्त स्तोका यः स लवः । जं० प्र० ९० । अलापीः-उक्तवती । उत्त० १३७ । लपतीति लपः-वाचालः, घोषितानेकतर्कविचित्रदण्डकः । सूत्र० ३९३ । लवः-सप्तस्तोकाः । जीवा० ३४४ । लवः-सप्तस्तोक( सप्तप्रमाण )रूपः । भग० २११ । लवः-सप्तस्तोकप्रमाणः । भग० २७६ । सप्तस्तोकरूपः । ज्ञाता० १०४ । लवः-बिन्दुः । आव० २३६ ।

लवइय-लवकितं-सञ्जातपल्लवलवमङ्कुरवदित्यर्थः । भग० ३७ । पल्लवितः । ज्ञाता० ५ । पल्लवितः । औप० ७ । लवकितः-सञ्जातपल्लवलवः । जं० प्र० २१ । पल्लवितः । जीवा० १८२ ।

लवक्षणम्- । आचा० १६५ ।

लवङ्ग-औषधिविशेषः । आव० ८११ ।

लवङ्गदलम्- । जीवा० १९१ ।

लवण-सान्निपातिकरसोपेतत्वात् लवणम् । जीवा० ३०३ । जीवा० ३७० । ऊषभेदः । मृत्तिकाभेदः । आचा० ३४२ । प्रकृतिक्षारं, तथाविधं शाकादि लवणोत्कटं वा अन्यत् । दश० १८० ।

लवणपंचय-लवणपञ्चकं-सैन्धवसौवर्चलबिडरौमसामुद्रलक्षणम् । सूत्र० १५९ ।

लवणसमुद्द-असङ्ख्यातद्वीपसद्रेषु प्रथमः समुद्रः । ज्ञाता० १२१, १३२ ।

लवणसमुद्दंत-लवणसमुद्रान्तः-लवणसमुद्रदिक् । जीवा०

३१५ ।

लवणसमुद्र-जम्बूद्वीपपरिक्षेपी समुद्रः । प्रज्ञा० ३०७ । लवणरसास्वादनीरपूरितः समुद्रः । अनु० ९० ।

लवणोदए-लवणोदक लवणसमुद्रे । प्रज्ञा० २८ ।

लवमात्रीकृतः-विदारितः । उत्त० ५०७ ।

लवय-लवकः-एकोरुकद्वीपे वृक्षविशेषः । जीवा० १४५ ।

लवल्लि-लविन्नाम् । महाप्र० ।

लवसत्तम-लवसप्तमः-पश्चानुत्तरविमानवासीदेवः, सर्वोत्कृष्टस्थितिवर्ती प्रधानः देवः । सूत्र० १५१ ।

लवसत्तमा-लवसप्तमा-अनुत्तरसुरभवस्थितिः । प्रश्न० १३५ । लवसप्तमा-अनुत्तरसुरभवस्थितिः । एकोनपञ्चाशतउच्छ्वासानां लवो भवति, व्रीह्यादिस्तम्बलवनं वा लवस्तत्प्रमाणः कालोऽपि लवः, ततो लवैः सप्तमः-सप्तप्रमाणैः सप्तसङ्ख्यैर्विवक्षिताध्यवसायविशेषस्य मुक्तिसम्पादकस्यापूर्यमाणैर्या स्थितिर्बध्यते सा । प्रश्न० १३५ । मानं माः संपदादेराकृतिगणत्वात् क्विप् सप्तभिरपूर्यमाणैर्मा परिच्छेदः प्राप्तया मोक्षगमनयोग्यानामायुष्कस्य येषां तानि सप्तमानि, लवैः कालविशेषैः सप्तमानि लवसप्तमानि । उप० मा० पृ० १६ । मानं माः परिच्छेदः सम्पदादेराकृतिगणत्वात् क्विप् सप्त च ते माश्च सप्तमाः, एकपदव्यभिचारेऽपि समासः, लवः कालविशेषः, लवानां सप्तमाः लवसप्तमाः, अविद्यमाना लवसप्तमाः सप्तमोलवः शेषस्यतां । उप० मा० पृ० १७ । लवसप्तमा-सप्तलवाः कालविशेषा आयु प्रभनु स्यात् सप्तलवप्रमाणं यद्यायुः प्राप्येऽस्यर्थः ततः सिद्धयेयुः परं त आयुस्तावन्मात्रं नहु-नैव भवति ततस्ते लवसप्तमा देवा जाता लवे सप्तमे सिद्धिरभविष्यत् यदि तावदायुर्मवेद्येषां ते लवसप्तमा नाम्नेकार्ये समासो बहुलमिति समासः लवसप्तमा । व्य० द्वि० १३२ आ । लवाः-शालादिकवलिकालवनक्रियाप्रमिताः कालविभागाः सप्त-सप्तसंख्या मानं-प्रमाण यस्य कामस्यासौ लवसप्तमस्तं लवसप्तमं कालं यावदायुष्यप्रभवति सति ये शुभाध्यवसायवृत्तयः सन्तः सिद्धि न, गता अपि तु देवेषूत्पन्नास्ते लवसप्तमाः, ते च सर्वार्थसिद्धाभिधानानुत्तरसुरविमाननिवासिनः । भग० ६५१ ।

लवसप्तमः-प्रहततरदेवाधिदेवः । उत्त० ६७ ।

लवा-शाल्यादिकवलिकालवनक्रियाप्रमिताः कालविभागाः । भग० ६५१ ।

लवाति-लवप्रमाणकमाला नवाः । ठाणा० ८६ ।

लवलाव-कालोपलक्षण तेन क्षणे क्षणे सामाचार्यनुष्ठानं कार्यम् । सम० ४८ । क्षणे क्षणे सामाचार्यनुष्ठानम् । प्रश्न० १४६ । लवालवं-कालोपलक्षणं क्षणे क्षणे सामाचार्यनुष्ठानं कार्यं । योगसङ्ग्रहे सप्तविंशतितमो योगः । आव० ६६४ ।

लवावसंकी-लव-कर्म तस्मादवसर्पितुं अवसर्तुं शीलं यस्य स लवावसर्पी । लोकायतिकः शाक्यादिश्च । सूत्र० २१४ ।

लवेवि- । भग० ८८८ ।

लसण-लशुनं-कन्दविशेषः । उत्त० ६९१ ।

लसि-रसिका । बृ० द्वि० २५४ अ ।

लसुण-लशुनं-कन्दविशेषः । आव० १०१ ।

लसुन-दुरभिगन्धपरिणता । प्रज्ञा० १० ।

लहु-प्रायस्तिर्यग्गूर्ध्वाधोगमनहेतुरर्कतूलादिनिश्रितो लघुः । अनु० ११० । वायुः । उत्त० ४१० ।

लहुअ-स्तोकता । आव० ४४१ ।

लहुई-लघ्वी-क्षुल्लिका । जं० प्र० ४१ ।

लहुईकओ-लघुकृतः-विगोपितः । आव० ७०८ ।

लहुओ-लघुकः । बृ० प्र० ४६ अ ।

लहुकरण-लहुकरण गमनादिका शीघ्रक्रियादक्षत्वमित्यर्थः । ज्ञाता० ९२ । लघुकरणं-दक्षत्वम् । उपा० ४४ ।

लहुपरक्कमे-लघुपराक्रमः-ईशानेन्द्रस्य पादत्राणिकाधिपतिः । जं० प्र० ४०५ । ठाणा० ३०३ ।

लहुभूओ-लघुभूतः-वायुः । उत्त० ५०५ ।

लहुभूय-लघुभूतः-अल्पोपधितया गौरवत्यागाच्च, लघुभूतो वायुस्तद्वद् यः सततविहारः सः । औप० ३७ । मोक्षः संयमो वा । आचा० १६४ । लघुभूतः-वायुः । दश० ११८ । लघुभूतः-संयमः । उत्त० ४१० । लघुः-वायुस्तद्वद्भूतं-भवनमेषां लघुभूताः वायूपमाः । उत्त० ४१० ।

लहुभूयगामी-लघुभूतो-मोक्षः, संयमो वा, तं गंतु शीलमस्येति लघुभूतगामी, लघुभूतं वा कामयितुं शीलमस्येति

लगुभूतकामी । आचा० १६४ ।

लहुभूयविहारी-लघुभूतविहारी-अप्रतिबद्धविहारी । उत्त० ४१० ।

लहुय-लघुकं-सत्त्वसारवर्जितत्वेन तुच्छ शीघ्रं वा । प्रश्न० १२० । लघुकः-त्रिंशद्दिवसपरिमाणः । व्य० प्र० १८७ अ ।

लहुयतराग-लघुतरकः-पंचविंशतिदिनमानः । व्य० प्र० १८७ ।

लहुयत्तं- । ज्ञाता० ११४ ।

लहुया-त्रीन्द्रियजीवविशेषः । प्रज्ञा० ४२ ।

लहुलियादी- । नि० चू० प्र० ३ आ ।

लहुवित्तीपरिक्खेव-वर्त्तनं वृत्तिः-द्वात्रिंशत्कवलपरिमाण-लक्षणा तस्याः परिक्षेपः-संक्षेपो वृत्तिपरिक्षेपः लघुर्वृत्ति-परिक्षेपोऽस्येति लगुवृत्तिपरिक्षेपः । आचा० २६४ ।

लहुस-अल्पम् । नि० चू० प्र० १३३ आ ।

लहुसग-लघुः-गुणगौरवरहितः स्वः-आत्मा विद्यते यस्य स लघुस्वकः । प्रश्न० २७ ।

लहुसतरग-लघुस्वतरकः दशदिवसमानः । व्य० प्र० १८७ आ ।

लहुसयंसि-लघुः स्व-आत्मा स्वरूपं अस्य स लघुस्वकः-अल्पस्वरूपः । ज्ञाता० ८६ ।

लहुसोय-लघुस्वकः-पंचदशदिवसः । व्य० प्र० १८७ अ ।

लहुस्सग-स्तोकः । व्य० प्र० १८५ अ । लघुस्वभावः । भग० ४७० । तुच्छायास्वादिना लब्धः । उत्त० १०४ ।

लहुहत्थ-क्रियासु दक्षहस्तः । ज्ञाता० ७९ । लघुहस्त.-दक्षहस्तः । विपा० ७५ । लघुहस्तः-हस्तलाघवः । प्रश्न० ४६ ।

लहू-लघुः-परिणामलघुः । जीवा० ३५५ ।

लाइअ-छगणादिना भूमेरुपलेपनम् । जं० प्र० ७६ ।

लाइउं-मानेतुम् । आव० ४३६ ।

लाइओ-दत्तः । ओघ० १४२ ।

लाइताओ-लगनः । आव० ३५४ ।

लाइम-लवनयोग्या-लवनयोग्यः । दश० २१९ ।

लाइमा:-लवनयोग्याः रोपणयोग्या वा । आचा० ३६१ ।

लाइयं-यद्भूमेश्छगणादिनोपलेपनम् । भग० ११८ । छगणादिना भूमिकायाः संमृष्टीकरणम् । भग० ५८२ । यद्भूमेर्गोमयादिनोपलेपनम् । राज० ३६ । यद्भूमेश्छ-गणादिनोपलेपनम । ओप० २ । यद्भूमेर्गोमयादिना उपलेपनम् । जीवा० १६०, २२७ । प्रज्ञा० ८६ ।

लाउए-तुम्बकत्रेपणभुवम् । ओघ० ६४ ।

लाउडिय-हंगरपेच्छणयं । नि० चू० प्र० ३५८ अ ।

लाउताल- । नि० चू० १०६ अ ।

लाउपण्णी- । नि० चू० द्वि० ७७ आ ।

लाउय-अलावुकम् । ओघ० ११९ । तुम्बिका । भग० ५७६ ।

लाउयवणे- । भग० ३६ ।

लाउयवण्णाभ-आर्द्रतुम्ववर्णाभं-राहुविमानम् । सूर्य० २८७ ।

लाउलिया-डंगराः-दस्यवः । बृ० द्वि० २७३ आ ।

लाउल्लोइय-लाइयं-छगणादिना भूमौ लेपनं उल्लोइयं-सटिकादिना कुड्यादिषु धवलनम् । ज्ञाता० ३१ ।

लाएइ-ददाति-अर्पयति । दश० १०४ ।

लाएत्तु-लापयित्वा-लागयित्वा । बृ० द्वि० ४४ अ ।

लाक्षा-जतु, दारुमृत्तिके प्रसिद्धे इति । ठाणा० २७२ ।

लाक्षारसः- । जीवा० १९१ ।

लाघव-द्रव्यतोऽल्पोपधिता भावतो गौरवत्रयत्यागः । ओप० ३२ । अल्पोपधित्वम् । प्रश्न० १३७ । लाघवं-अप्रतिबद्धता । आव० ६४६ । लाघवं-द्रव्यतोऽल्पोपधित्वं भावतो गौरवत्यागः । क्रियासु दक्षत्वम् । भग० १३६ । लाघवं-क्रियासु दक्षत्वम् । ज्ञाता० ७ । द्रव्यतोऽल्पो-पधित्वम । ज्ञाता० ६ । क्रियासु दक्षत्वम् । राज० ११६ ।

लाघवपहार-लाघवप्रहारः-दक्षताप्रयुक्तघातः । प्रश्न० ४६ ।

लाघविय-लाघविकं-अल्पोपधिकम् । भग० ६७ ।

लाङ्गलं- । प्रज्ञा० ४७३ ।

लाजा-शालिव्रीह्यादेरग्निना यो लाजः क्रियते स इति । आचा० ३२३ ।

लाञ्छनम्-लाञ्छनम् । आव० १८८ ।

लाञ्छना-लाञ्छना । आव० ५३७ ।

लाटदेश-ईषल्लाटलाटादयस्तु देशः । प्रज्ञा० २६ ।

लाटा-जनपदविशेषः। प्रज्ञा० ५५।
लाटाचार्य-आचार्यविशेषः। नि० चू० प्र० १५३ आ।
लाड- । नि० चू० तृ० ६७ आ।
लाढ-सदनुष्ठानतया प्रधानः। उत्त० ४१४। जनपदविशेषः। भग० ६८०। जनपदविशेषः। आचा० ३७८। येन केनचित् प्रासुकाहारोपकरणादिगतेन विधिनाऽऽत्मानं यापयति-पालयतीति लाढः। सूत्र० १८६। लाढः-यापकः, लाढयति प्रासुकैषणीयाहारेण साधुगुणैर्वाऽऽत्मानं यापयतीति लाढ, प्रशसाभिधायि वा देशीपदम्। उत्त० १०७। साधु जम्हा उग्गमुप्पादणेसणासुद्धेण आहारोवधिणा संजमभरवहणट्ठयाए अप्पणो सरीरगं लाडेतीति लाढो। नि० चू० तृ० ३५ आ।
लाढावज्जभूमी-लाढावज्रभूमिः-म्लेच्छभूमिः। युद्धभूमिः। आव० २१२।
लाढाविसय-लाढाविषयं-जनपदविशेषः। आव० २०६।
लाढाहि-यापय। उत्त० २७३।
लाढेति-स्थापयति,। बृ० द्वि० २१८ आ।
लिप्पासण-लिप्यासनं-मषीभाजनम्। राज० ९७।
लाबु-तुम्बकम्। अनु० १४२।
लाभंतर-लाभान्तरं-लाभविच्छेदः। उत्त० २१८।
लाभंतराय-यदुदयवशाद्दानगुणेन प्रसिद्धादपि दातुर्गेहे विद्यमानपि देयमर्थजातं याच्ञाकुशलोऽपि गुणवानपि याचको न लभते तल्लाभान्तरायः। प्रज्ञा० ४७५।
लाभ-अर्थावाप्तिः। उत्त० २९७। लम्भनं लाभः अपूर्वार्थप्राप्तिः। उत्त० २१७। लाभः। व्य० द्वि० ३४१ आ।
लाभत्थि-लाभार्थी-भोजनमात्रादि प्राप्त्यर्थी। जं० प्र० २६७। लाभार्थीः-सामान्येन लाभेप्सुः। ज्ञाता० ५८।
लाभविजयः- । जं० प्र० ५४५।
लामंति-रम्याणि। औप० ७०।
लाम-रम्याणि। जं० प्र० २६५, ५३०।
लायंत-आददानः। आव० ६९७। लाता। आव० ४२५।
लायप्पहार- । ज्ञाता० २३०।
लाया-विहिया। नि० चू० प्र० १०० आ। राजा० आव० ४६७, ६९५। णाम वीहिया तिमिउं भट्ठे भुज्जिता तोण तंदुलेसु पेज्जाकज्जति तं। नि० चू० प्र० १०० आ।
लायातरणं-लाया-विहिया-तिमिउं भट्ठेसु भुज्जिता ताण तंदुलेसु पेज्जा कज्जति तं। नि० चू० १०० आ।
लालप्पणपत्थणा-लालपनस्य-गर्हितलापस्य प्रार्थनेव प्रार्थना लालपनप्रार्थना। तृतीयाधर्मद्वारस्य पञ्चविंशतितमं नाम। प्रश्न० ४३।
लालप्पमाण-लालप्यमानः-भोगार्थमत्यर्थं लपन् वाग्दण्डं करोति। आचा० १२१।
लाला-ललतीति लाला अस्पष्टमुखश्लेष्मसन्ततिः। आचा० १३८। मुखाद् यो स्रावः। जीवा० ३६। जीवा० २०७। लाला, मुखात् स्रावः। प्रज्ञा० ४७। वट्टा। वर्तिः। नि० चू० तृ० २१ अ। वर्तिः। बृ० द्वि० १७७ अ।
लालाओ-वचनस्थः। जं० प्र० ५३।
लालाविस-लालाविषः-उरःपरिसर्पविशेषः। जीवा० ३९।
लालाविसा-लाला-मुखात् स्रावः तत्र विषं येषां ते लालाविषाः। प्रज्ञा० ४६।
लालियं-लालितं-अश्वकलाविशेषः। उत्त० २२३।
लालेमाणे-उपलालयन्-लोलया उपभुञ्जानः। राज० ४३।
लावक-लावकः-पक्षिविशेषः। प्रश्न० ८। सिखिधूमवर्णलावकः। नि० चू० द्वि० ७१ अ।
लावकादिखेड्ड-रमणम्। आव० ३४६।
लावग-लावकः-पक्षिविशेषः। आचा० १६। लावकः-पारावतः। आव ८१९। लावकः-लोमपक्षिविशेषः। जीवा० ४१।
लावगा-लोमपक्षिविशेषः। प्रज्ञा० ४९। अल्पतरा। नि० चू० प्र० २७७ अ।
लावण-लवणसंस्कृतः। विपा० ४९।
लावणिया-लावणिका लवणसमुद्रभवा। सूर्य० २८०।
लावण्ण-लावण्यं-स्पृहणीयता। प्रश्न० ८५। लावण्यं-सौन्दर्यम्। आव० ५६६। लावण्यं-आकारस्य स्पृहणीयता। जं० प्र० ११६। लावण्यं-शरीराकृतिविशेषः। भग० ६४३। नयनमनसामाल्हादको गुणः। उत्त० ६२६।

लावन्नं-लावण्यं-आकारस्य स्पृहणीयता । औप० १३ ।
लावण्यं-अतिशायी मनोभर्वविकारहेतुः परिणतिविशेषः । प्रज्ञा० ५५१ । लावण्यं-स्पृहणीयता । ज्ञाता० २११ ।
लावण्यं-स्पृहणीयत्वम् । ज्ञाता० १६१ ।
लावयंति-उपनिमन्त्रयेयुः-उपलोभयेयुः । सूत्र० ५६ ।
लावलवियं-लौल्योपेतम् । आव० ५३७ ।
लावलव्वता द्रुतत्वेन । नि० चू० द्वि० १५ अ ।
लावालुंको- । भग० ८०३ ।
लाविया-उपनिमन्त्रणा । सूत्र० ५९ ।
लासक-लासकोः-य रासकान् गायति, जयशब्दप्रयोक्ता वा भाण्डः । राज० २ ।
लासकदेशज-लासिकिः । जं० प्र० १६६ ।
लासग-लासकाः-यो रासकान् ददति तेषां प्रेक्षा । जं० प्र० १२३ । लासकः-यो रासकान् गायति, जयशब्दप्रयोक्ता वा भाण्ड इति । जीवा० २८१ । प्रश्न० १४१ । औप० ३ । अनु० ४६ ।
लासगा-जयसद्दपयोत्तारो लासगा-भंडा इत्यर्थः । नि० चू० प्र० २७७ अ ।
लासति-लास्ययति-लास्यरूपं नृत्यं करोति । जीवा० २४७ ।
लासिया-लासिका-धात्रीविशेषः । ज्ञाता० ३७ ।
लाह-लाभमदः-लाभस्य मानम् । आव० ६४६ ।
लाहनक-प्रहेणकम् । पिण्ड० १०३ ।
लाहुक्कं-लाघवम् । बृ० तृ० २११ आ ।
लिंग-रजोहरणमुखवस्त्रिकारूपम् । व्य० प्र० १८४ अ । प्रव्रज्या । बृ० तृ० ७८ अ । लिङ्गं-साधुवेषः । भग० ६१ । लिङ्ग्यते साधुरनेनेति लिङ्गं-रजोहरणादिधरणलक्षणम् । लिङ्ग्यते-गम्यतेऽनेनायं व्रतीति । आव० ५२५ । रजोहरणम् । व्य० प्र० १६७ अ । ठाणा० २३४ ।
लिंगकसायकुसील-कषायकुशीलविशेषः । भग० ८९० ।
लिंगपुलाए-लिङ्गमाश्रित्य पुलाकस्तस्यासारताकारी-विराधको लिङ्गपुलाकः । भग० ८९० ।
लिंगपुलात-यथोक्तलिङ्गाधिकग्रहणात् निष्कारणेऽन्यलिङ्गकरणाद्वा लिङ्गपुलाकः । ठाणा० ३३७ । लिङ्गपुलाकः-पुलाकस्य चतुर्थो भेदः । उत्त० २५६ ।
लिंगभिन्न-लिङ्गभिन्न-लिङ्गव्यत्ययः, सूत्रदोषविशेषः । आव० ३७५ ।
लिंगावधी- । व्य० द्वि० ३३० अ ।
लिंगी-लिंगिनः-असंजता गिही लिंगी वा । लिंगमेषां विद्यत इति लिंगिनः-अन्य पाखण्डिनः इत्यर्थः । नि० चू० द्वि० १३० अ ।
लिछा-चुल्लीस्थानम् । ठाणा० ४१९ ।
लिंड-लिन्द्रं अशैवलपुराणजलवत् । प्रश्न० १६३ । ज्ञाता० ६३ ।
लिंद- । जीवा० ३७० ।
लिंपण-लिम्पनं-छगणादिना भूमेः प्रथमतो लेपनम् । प्रश्न० १२७ ।
लिंपेति-छगणादिना पुनर्मसृणी कुर्वंति । ज्ञाता० ११६ ।
लिंब-लिम्बः-बालोरभ्रस्योर्णायुक्ता कृतिः । ज्ञाता० १३ ।
लिंबो- । नि० चू० प्र० २२४ आ ।
लिक्ख-गणना । उ० मा० गा० ४३७ ।
लिक्खइ-रेखादीयते । उ० मा० गा० ४३७ ।
लिक्खा- । भग० २७५ ।
लिङ्ग-वर्षाकल्पादिरूपो वेषः । उत्त० ५०३ । लिङ्गः-रजोहरणमुखपोतिकादिः । व्यव० ३ ।
लिङ्गाः-कषायैर्लिङ्गान्तरं कुर्वन् । ठाणा० ३३७ ।
लिङ्गभिन्न-यत्र लिङ्गव्यत्ययः । अनु० २६२।
लिच्च-कोमलानि नम्रशीलं च । जं० प्र० ५५ ।
लिच्छारिए-लिप्तम् । नि० ० तृ० ७२ आ ।
लिच्छारियं-लिप्तम् । आव० ७४२
लित्त-नम्रशीलम् । नमनशीलम् । जीव० २१० । दिग्धम् । सम० १३६ । सर्वतो गोमयादिनैव लिप्तम् । भग० २७४ । लिप्तं-उपदिग्धम् । प्रज्ञा० ८० । लिप्तं-नवम एषणादोषः । पिण्ड० १४७ ।
लित्ताणं सर्वतः । ठाणा० १२४ ।
लिन्द्र गोचराख(स्त्र)रसविक्षेपकलितत्वात् । जीवा० ३०३ ।
लिपि-अष्टादशस्यानोक्ता । जं० प्र० १३७ ।
लिप्तं- । आचा० ३४५ ।
लिप्पत्- । ओघ० १३९ ।

लिप्पासण-लिप्पासनं-मषीभाजनम् । जीवा० २३७ ।
लिप्सा-लब्धुमिच्छा । आव० ८२५ ।
लिम्ब-लिम्बं कोमलं नमनशीलं च । राज० ३७ ।
लिवी-लिपिः-पुस्तकादावक्षरविन्यासः । भग० ५ । दोहिं मिलिउ उप्पाइया अथवा दुमिडमाइ । नि० चू० प्र० २५२ अ ।
लिसति-दर्शनीयत्वातिशयतः श्लिष्यति । जीवा० १९१ ।
लिसिस्सामो-श्लेषयिष्यामः । सूत्र० ४१३ ।
लिसी-ऋषयः । बृ० द्वि० २८३ अ ।
लिहइ-लेढि । विशे० ६३५ ।
लीनता-तिरोभावः । विशे० १०६२ ।
लीलट्ठियसालभंजिया-लीलास्थितशालभञ्जिका – लीलास्थितपुत्रिका । जीवा० २०४, ३०६ ।
लीला-ललिताङ्गनिवेशरूपा । जं० प्र० ५१ । ललिताङ्गनिवेशरूपा । जीवा० २०६ ।
लीलाकट्ठय-लीलाकाष्ठम् । आव० २२४ ।
लीलाकम्बिका-लीलावेतः । लीलायष्टिः । नंदी० १४८ ।
लुंक- । नि० चू० द्वि० १५७ आ ।
लुंग-भेजकम् । भग० ८८ ।
लुग्गंसि-रुग्ने जीर्णतां गतः । ज्ञाता० ११५ ।
लुग्ग-लुग्नः जलसेचना करणतः । व्य० द्वि० ११५ अ ।
लुंचिसु-अलुञ्चिषुः । आचा० ३१२ ।
लुटग-विलओलगा । नि० चू० द्वि० २१ अ ।
लुंपणा-लोपना-छेदनं प्राणानाम् । प्राणवधस्यैकोनत्रिंशत्तमः पर्यायः । प्रश्न० ६ ।
लुंपणा धणाणं-धनानां लोपनां-परद्रव्याणां अवच्छेदनं अधर्मद्वारस्य षोडशमं नाम । प्रश्न० ४३ ।
लुक्क-छन्नः, स्थिरः । नि० चू० द्वि० ७३ आ । लुञ्चितः । पिण्ड० ७६ ।
लुक्ख-रुक्ष-स्नेहवर्जितम् । आव० ७२६ । रूक्षः-काकादिशब्दवत् । ठाणा० ४७१ । रूक्ष-धूसरवर्णम् । बुभुक्षावशेन रूक्षीभूतत्वम् । भग० १२५ । रुक्खो-वृक्षः । उत्त० १३८ । रूक्षः-पुद्गलद्रव्याणामेवायन्वनिबन्धनं भस्माद्याधारो रूक्षः । अनु० ११० । रूक्षः स्नेहकार्याकरणाद् । ज्ञाता० १६५ ।
लुक्खकच्छू-रूक्षकच्छुः-खर्जूविशेषः । उत्त० २०१ ।
लुक्खबंधणपरिणाम-रूक्षस्य सतो बन्धनपरिणामः-रूक्षबन्धनपरिणामः । प्रज्ञा० २८८ ।
लुक्खया-रूक्षता । भग० ३०६ ।
लुट्टंतो-लुठन्-गच्छन् । आव० ३५१ ।
लुद्ध-लुब्धः । ओघ० १५० । लोध्रं-गन्धद्रव्यम् । दश० २०६ । आचा० ३६३ ।
लुद्धदिट्टंता- । नि० चू० प्र० २०२ अ ।
लुद्धणंद-लुब्धनन्दः वणिग्विशेषः । लोभे उदाहरणम् । आव० ३९७ । लुब्धनन्दः-लोभवशात् शूलायां भिन्नः । आव० ३९७ ।
लुद्धणंदी-लोभे इमं उदाहरणम् । नि० चू० प्र० ३५२ आ ।
लुद्धनंद-लुब्धनन्दः-पञ्चमाणुव्रते उदाहरणम् । आव० ८२६ ।
लुद्धय-लुब्धकः-व्याधः । प्रश्न० १३ ।
लुप्ततेजा-अर्द्धभूततेजाः । भग० ६८४ ।
लुप्पंत-लुप्यमानः-छिद्यमानः । उत्त० २६४ ।
लुप्पई-लुप्यते-कर्मणा क्लेशमनुभवति । आचा० ३०१ ।
लुप्पति-लुप्यते-दारिद्र्यादिभिर्बाध्यते । उत्त० १६२ ।
लुब्धक-वागुरिकः । सूत्र० ३२१ ।
लुब्धकदृष्टान्तभावितः-श्रमणोपासकभेदः । भग० २२७ ।
लुभ्यति-प्राणिनि स्निह्यति संश्लिष्यतीति वा । प्रश्न० ७ ।
लुलिय-लुलितं-तीरभुवि लुठितम् । प्रश्न० ५० ।
लुलिया-लुलिता-मदवशेन घूर्णिता, स्खलत्पदेत्यर्थः । उपा० ५० । लुलिता-अतिक्रान्तप्राया । ज्ञाता० ९७ ।
लुस्सेलुय-शाकम् । नि० चू० द्वि० ४० आ ।
लूडित-लुण्टितः । आव० ३६५ ।
लूणावेइ-लावयति । आव० २१२ ।
लूर्णति- । ज्ञाता० ११६ ।
लूता-कुष्ठभेदः । आचा० ७५ । अवदहिता । ओघ० १३० । विसकुम्भो । नि० चू० प्र० ४८ अ ।
लूया-लूता-कोलिकपुटम् । बृ० प्र०२७८अ । लूता-कोलियकः । ओघ० १२६ ।
लूयातंतुपुडग-लूतातन्तुपुटकम् । उत्त० ३२५ ।

लूषयन्-शनैः प्रमार्जयन् । ३२९ ।
लूषयेत् दशेत् । व्य० द्वि० १३३ अ ।
लूसए-लूषयति-मुष्णाति व्यंसकापादितमनिष्टमिति लूषकः। ठाणा० २६२ । लूषयति-मुष्णाति । ठाणा० २६२ । लूषयेत् स्वकं स्वत एव खण्डयेत् । दश० १७६ ।
लूसग-लूषकः-विकल्पभेदः । दश० ५७ । लूषकः-व्रतानां विध्वंसकः । आचा० २५३ ।
लूसण-लूषणं-हस्तादिना पनकादेः सम्मार्जनम् । औप० ५३ ।
लूसिए-लूषितः खड्गादिना । दश० २६७ ।
लूसिमो-रुष्यामः-रोषं कर्तुमर्हामः । वृ० द्वि० २८७ अ ।
लूसेज्ज-विराधयेत् । आचा० ३४४ ।
लूसेमाणी-मुष्णन्ति । जीवा० ३६२ ।
लूहे-रूक्ष.-शरीरे मनसि च द्रव्यभावस्नेहवर्जितत्वेन परुषः, लूपयति वा कर्म्ममलमपनयतीति लूषः । ठाणा० १८१ । रूक्षः-संयमः । सूत्र० ८८ । रूक्षः । भग० ४८४ । रूक्षः-अन्तप्रान्ताहारत्वेन रूक्षः । सूत्र० १९८ । रूक्षः-स्नेहपरित्यागात् । साधोरूपमानम् । दश० ८४ । आगन्तुकस्नेहादिरहितं, रागरहितमपगताङ्गारम् । आचा० १४४ । स्वजनादिषु स्नेहविरहाद्रूक्षः साधुः । दश०२६२ । रूक्षः-निःस्नेहम् । ठाणा० २९८ । तैलादिवर्जितम् । ठाणा० २९८ । रूक्षः-निःस्नेहः । ज्ञाता० १११ । रूक्ष-आगन्तुकस्नेहादिरहितं द्रव्यतो भावतोऽपि, रागरहितमपगताङ्गारम् । आचा० १४४ । रूक्षं-अप्रीणितम् । भग० १८६ । रूक्षं-निःस्नेहम् । प्रश्न० १०६ । रूक्षः-संयमाग्निःसङ्गात्मकः । आचा० २५८ ।
लूहदेसिए-रूक्ष्यदेश्यं-रूक्षकल्पमन्तप्रासम् । आचा० ३१० ।
लूहवित्ती-रूक्षवृत्तिः-संयमवृत्तिः । दश० १८७ ।
लूहि-तिरये चिट्ठति । नि० चू० तृ० १७ आ ।
लूहेंति-रूक्षयति । आव० १२३ ।
लेंडिया-लिण्डिका । आव० ४१७ ।
लेख द्विधा लिपिविषयभेदात् । सम० ८३ ।
लेखनी-लेखिनी-ययाऽक्षराणि लिख्यन्ते । जीवा० २३७ । अनु० १२३ ।
लेच्छइ-लिप्सुः वणिगादिः । सूत्र० २७८ । लेच्छकिः-एतन्नामानो राजविशेषः । भग० ३१७ । क्षत्रियविशेष एव । सूत्र० २३६ । लिप्सुः वणिग्विशेषः । ठाणा० ५०८ । लेच्छकी-राजविशेषः । औप० ५८ । भग० ११५, ४६३ ।
लेच्छकिनः-राजविशेषाः । राज० १२१ ।
लेच्छारिय-खरण्टितः । व्य० द्वि० २४६ आ । खरण्टितम् । पिण्ड० ७४ । लिप्तम् । नि० चू० प्र० २२० अ ।
लेज्झ-लेह्यं-मधुशिखरिणीप्रभृति । ज्ञाता० २३२ ।
लेट्ठु-लेष्टुः । प्रश्न० ५८ । लेष्टुः, विजातिरत्नम् । जं० प्र० २१२ ।
लेट्ठुअ-लेष्टुकम् । आव० २१८ ।
लेण-लयनं-आश्रयः सत्त्वानाम् । ठाणा० ४३० । लयनं-गृहम् । ठाणा० ४५१ । लयनं-पर्वतनिकुट्टितगृहम् । प्रश्न० ८ । लयनं-शैलगृहम् । प्रश्न० १२७ । लयनं-गुहा । उत्त० ६४ । लयनं-उत्कीर्णपर्वतगृहः । भग० २३८ । लयनं-पर्वतनिक्कुटितगृहम् । जं० प्र० १०७ । लयनम् । दे० । यस्स उवरिं देवकुलं तं । नि० चू० प्र० १६२ आ । लयनं-गिरिपर्वपाषाणगृहः । ज्ञाता० ८० ।
लेणसुहुम-लयनसूक्ष्मम् । ठाणा० ४३० ।
लेत्थारिय-लिप्तम् । ओघ० १४४ ।
लेव-नाभिप्रमाणे उदकसंस्पर्शे लेपः । व्य० प्र० २५ आ ।
लेवकलिपक-सूत्रोक्तप्रकारेण लेपं परिहरति-परिभोगयति स लेपकल्पिकः । वृ० प्र० ८२ आ । लेपकृतम् । वृ० प्र० २३८ ।
लेपगमहे- । नि० चू० प्र० ३४८ अ ।
लेपनं- । वृ० ९२ ।
लेप्प-लेप्यं-मृत्तिकाविशेषः । प्रश्न० १६० । लेप्यं वज्रलेपादिर्लेप्यद्रव्यः । उत्त० ४६१ ।
लेप्पकम्म-लेप्यकर्म्म-लेप्यरूपकम् । अनु० १२ । लेप्यपुत्तलिकादि । अनु० १२ ।
लेप्पकार-लेप्यकारः-शिल्पभेदः । अनु० १४९ ।
लेप्पट्ठाण-लेप्यस्थानम् । आव० ४१२ ।
लेप्पार-सुवर्णकारविशेषः । प्रश्न० ५६ ।

लेप्यकर्म्म-लेप्यरूपकम् । अनु० १३ । लेप्यकर्म-पुस्तकर्मम् । आचा० ४१४ ।

लेलु-लोष्ठः । सूत्र० २९८ । लोष्टः । दश० १५२ । लेष्टुः-इट्टालखण्डः । दश० २२८ । लेष्टुः । पिण्ड० १०६।

लेलू-लेष्टुः । आव० ६५६ । पृथिवीशकलम् । आचा० ३३७ ।

लेव-लेपः-नालन्दाबाहिरिकायां गाथापतिः। सूत्र० ४०७ । लेपः-उदकमेव नाभिप्रमाणम् । ओघ० ३२ । लेपः-नाभिप्रमाणजलम् । ओघ० ३२ । लेपकः पात्रकाणाम् । ओघ० १३० । लेपः-नाभिप्रमाणमुदकम् । आव० ६५६ । लेपः-भोगपुरपाषाणादिनिष्पन्नः । पिण्ड० ९ । लेपः-तक्रादिः । पिण्ड० ११७ । लेपः-शकटाक्षादिनिष्पादितः पात्रगतः परिगृह्यते । उत्त० २६९ । उपचयः । उत्त० २९६ । लेपः- । नि० चू० प्र० ७३ अ । लेपः-अवश्रावणादि । बृ० द्वि० २२० । लेपः-नाभिमानं जलम् । बृ० तृ० १९१ । लेपः-वत्थमालो । नि० चू० तृ० १२६ आ । लेपः-सुक्कजंघद्धाओ आरुभेऊण उवरिं जावणाभि वुड्डति एस लेवो भन्नति । नि० चू० द्वि० ७८ आ । भन्नति । नि० चू० द्वि० ७८ आ ।

लेवकडा-लेपकृता-अनायुक्ता । ओघ० १८६ ।

लेवण-लेपनः । आचा० ३६८ । लेपनः-मलः । व्य० प्र० १०४ अ । कुट्टाणलिपणं । नि० चू० प्र० २३० आ ।

लेवदाणं-लेपदानं-पात्रकस्य कर्तव्यं लेपेन लेपनम् । ओघ० १३६ ।

लेवनिका- । आचा० ३६१ ।

लेवमाया-लेपमर्यादा-अलेपं संलिह्य । दश० १८२।

लेवाड-लेपकृत् । आव० ८५७ ।

लेवाडयं- । दश० चू० ५० ।

लेवालेव लेपालेपः । आव० ८५४ ।

लेवि-सउणो पक्खी । नि० चू० द्वि० ५१ ।

लेवुवरि-लेपोपरि-परेण नाभेर्जलं यत् । ओघ० ३२ । लेपोपरि-जङ्घार्धं संघट्टो नाभिर्लेपः परतो लेपोपरीति । आव० ६५६ ।

लेवोवरि-णाभीतो आरभेऊण उवरिं सव्वं लेवोवरि

लेश्या-अन्तःपरिणामरूपाया शुक्लादिका । ठाणा० ४२१।

लेश्यापदं- । प्रज्ञा० १३६।

लेश्योद्देशकः- । प्रज्ञा० ३३७ ।

लेस-लेश्या-भास्वरता । नंदी० ४५ । लेशः-संश्लेषः । जीवा० २०७ । श्लेषः-श्लेषद्रव्यम् । प्रश्न० १५३ ।

लेसज्झयणं-उत्तराध्ययने चतुस्त्रिंशतमध्ययनम् । सम० ६४ ।

लेसणं-श्लेषणं-ऊर्वादीनां जानुप्रभृतिभिः सम्बन्धः । प्रज्ञा० ३२९ ।

लेसणता-आत्मसञ्चेतनीयोपसर्गे चतुर्थो भेदः । ठाणा० २८० ।

लेसणया-श्लेपणता-वङ्गगतेःतृतीयो भेदः। प्रज्ञा० ३२८। श्लेषणता-पादमाकुच्य स्थितो यावत्तत्र वा तत्र वातेन लग्नः, नृत्यं शिक्ष इति अतिनामितं किञ्चिदङ्गं तत्रैव लग्नं वा, आत्मसंवेदनीया वातिकाः पैत्तिकाः श्लेष्मिकाः सान्निपातिका वा । आव० ४०५ ।

लेसणाबंध-श्लेषणा-श्लथद्रव्येण द्रव्ययोः सम्बन्धनं तद्रूपो यो बन्धः स । भग० ३९८ ।

लेसा-लेश्या-अध्यवसायविशेषरूपा । आचा० ३१ । अध्यवसायः । आचा० २५८ । अन्तःकरणरूपा । चित्तविप्लुती । आचा० ३३२ । लिश्यन्ते प्राणी कर्मणा यया । ठाणा० ३१ । लेश्याम् इति लेश्या, दीप्तिः मण्डलम् । सम० ३० । कृष्णादिद्रव्यसाचिव्यादात्मनः शुभाशुभपरिणामः । जीवा० १५ । लेश्याः-अन्तःकरणवृत्तयः तैजसी प्रभृतयो वा । आचा० २८२ । श्लेषयन्त्यात्मानमष्टविधेन कर्मणेति लेश्याः-कायाद्यन्यतमयोगवतः कृष्णादिद्रव्यसम्बन्धादात्मनः परिणामः । आव० २० । लेश्या-अन्तःकरणवृत्तिः । सूत्र० १२० । लेश्या-देहवर्णः । औप० ५० । भग० १३२ । तेजोलेश्यादिका । औप० ९९ । लेश्या-कृष्णादिद्रव्यसाचिव्यजनित आत्मपरिणामः । विपा० ५३ । लेश्या-देहवर्णसुन्दरता । जीवा० १६२ । लेश्या-रश्मिसङ्घातः । ज० प्र० ४६४ । लेश्या-अन्तःकरणवृत्तिः । प्रश्न० १५७ । लेश्या-तेजः । भग० ६५५ । ज० प्र० १०३ । सूर्य० ७७ । लेश्या-

उत्तराध्ययनेषु चतुस्त्रिंशत्तममध्ययनम् । उत्त० ९ । दश० ५८ । लेशयति-श्लेषयतीवात्मनि जननयनानीति लेश्या । अतीव चक्षुरोक्षेपिका स्निग्धदीप्तरूपा छाया । उत्त० ६५० । इत्थीमादि तदंगपरिभोगज्झवसाओ लेसा । नि० चू० तृ० १ अ । लेश्या-शुक्लादिद्रव्योपहितजीवपरिणतिरूपा । जं० प्र० २७१ । लेश्या-आत्मपरिणामः । उपा० २६ ।

लेसागई-यत्तिर्यङ्मनुष्याणां कृष्णादिलेश्याद्रव्याणि नीलादिलेश्याद्रव्याणि सम्प्राप्य तद्रूपादितया परिणमन्ति सा लेश्यागतिः । विहायोगतेरेकादशम भेदः । प्रज्ञा० ३२७ ।

लेसाणुवातगती-लेश्याया अनुपातः-अनुसरणं तेन गतिः लेश्यानुपातगतिः । विहायोगतेर्द्वादशम भेदः । प्रज्ञा० ३२७ ।

लेसिओ-श्लेषितः-पिष्टः, भूम्यादिषु वा लगितः । आव० ५७३ ।

लेसिज्ज-लेषयेत्-संश्लेषं कुर्यात् । आचा० ३४४ ।

लेसुद्देसओ- । भग० ७६१ ।

लेसेइ-श्लेषयति-आत्मनि श्लिष्टान् करोति । भग० २३० ।

लेसेति-लेशयति-मनाक् स्पृशति । प्रज्ञा० ५९२ ।

लेसेह-श्लेषयथ । भग० ३८१ ।

लेस्सा-लेश्याः-कृष्णादिभेदा अशुभाः शुभाश्च कषाययोगपरिणामविशेषसमुत्थाः । आचा० ६८ । लेश्या-लेशनात् संश्लेषणात् लेश्या । भग० ४६ । लेश्या-आत्मपरिणामविशेषः । भग० ८९ । लेश्या-मनोवृत्तिः । भग० १२३ । लेश्या किरणरूपा । ज्ञाता० १७० । लेश्या-प्रज्ञापनायाः सप्तदश पदम् । प्रज्ञा० ६ । लेश्या-देहवर्णसुन्दरता । प्रज्ञा० ८८ । लेश्या-लिश्यते-श्लिष्यते आत्मा कर्मणा सहानयेति लेश्या-कृष्णादिद्रव्यसाचिव्यादात्मनः परिणामविशेषः । प्रज्ञा० ३३० । जीवपरिणतिः । भग० ६३१ । लेश्या-योगपरिणामः । प्रज्ञा० ६०७ । लेश्या-पौरुपाच्छाया । सूर्य० ६६ । लेश्या-प्रकाश्यं वस्तु । सूर्य० ६६ । लेश्या । सूर्य० ७३ ।

लेस्सापए-लेश्यापदं-प्रज्ञापनायाः सप्तदशमं पदम् । भग० २०४ ।

लेस्सापद-लेश्यापदं-प्रज्ञापनायाः सप्तदशमं पदम् । भग० २०५ ।

लेस्सापय-प्रज्ञापनायां लेश्यापदस्य द्वितीयोद्देशकः । भग० ४६ ।

लेह-लेखनं लेखः-अक्षरविन्यासस्तद्विषया कला-विज्ञानं लेखः । जं० प्र० १३७ । लेखः-लिपिविषयभेदात् द्विधा । सम० ८३ । रेखास्थं परिपूर्णम् । व्य० द्वि० ४५३ आ ।

लेहचेड-लेखदारकः । आव० ३५४ ।

लेहण-लम्पटः । उ० मा० २५४ ।

लेहत्थ-रेखा-पादपर्यन्तवर्त्तिनी सीमा तत्स्थम् । रेखास्थं । सूर्य० १३३ ।

लेहसाला-लेखशाला-शिशुशिक्षणशाला । आव० ४२९ ।

लेहा-प्रथमाकला । ज्ञाता० ३८ ।

लेहाइया-द्वासप्ततिकलायां आदिमा । ज्ञाता० ३८ ।

लेहायरिओ-लेखाचार्यः-उपाध्यायः । आव० १८२ ।

लेहारिय-लेखहारकः । आव० ७१० ।

लोआययमय-लोकायतमतं-नास्तिकाभिप्रायः । दश० १२५ ।

लोइय-असंजयमिच्छादिट्ठिलोगो घेप्पति । नि० चू० प्र० ६३ अ । असारम् । नि० चू० प्र० २७३ आ । लौकिकी-असंविग्नलोकसम्बन्धिनी । प्रश्न० १३६ ।

लोइया-लौकिकाः-इतिहासादिकर्त्तारः । दश० १२७ ।

लोउत्तर-लोकोत्तरः-जैनः । जं० प्र० ४९१ ।

लोए-लोकः-पाखण्डिलोकः । दश० १०६ । लोकः-जनः । दश० १०६ । लोकः-रामायणादिकम् । दश० ११४ । लोकः-मनुष्यलोकः । दश० १९८ । लोकः-प्राणिसङ्घातः । दश० २२२ । लोक्यते-दृश्यते केवलालोकेनेति लोकः-धर्मास्तिकायादिद्रव्याधारभूत आकाशविशेषः । ठाणा० १८ । लोकः-लौकिकशास्त्रम् । प्रथमः कुडङ्कः । आव० ८५६ । लोकः-अर्द्धतृतीयद्वीपसमुद्रपरिमाणः । दश० ६८ । जीवलोकः । भग० ६७३ । लोकः-रूपरसगन्धस्पर्शशब्दविषयात्मः । आचा० ६४ । स्कन्धः । आचा० ३५५ । लोकः-पञ्चास्तिकायमयः । औप० ७९ । लोकः-जीवलोकः । ज्ञाता० ६१ ।

लोओ-लोकः-क्षितिजलानलानिलवनस्पतिरूपनारकतिर्यग्नराः । प्रश्न० ३३ । लोकः-प्रवचनबाह्यो जनः । जं०

प्र० ४६१ ।

लोकधम्मं-"आपुच्छिऊण गम्मइ पुत्तं च मोत्त च मणिय होइ । अभिजाओत्ति अ भण्णइ सो वि जणो माणिओ होइ ।" वृ० प्र० २४० आ ।

लोकनिष्कुटं- । प्रश्न० ५०३ ।

लोकपङ्क्तिः- । उत्त० ५९१ ।

लोकपडिपूरणा-दसप्रागभारस्यैकादशमनाम । भग० २२ ।

लोकपाला-सोमादयः सीमिनियुक्तकाः । ठाणा० ११७ । आरक्षिकार्थचरस्थानीयाः । तत्त्वा० ४, ४ ।

लोकबिंदुसार-लोके-जगति श्रुतलोके च अक्षरस्योपरि-बिन्दुरिव सारं-सर्वोत्तमं सर्वाक्षरसन्निपातलब्धिहेतुत्वात् लोकबिन्दुसारम् । नंदी० २४१ ।

लोकमेलापक-लोकमट्टकः । नंदी० १५१ ।

लोकविजओ-भावलोकस्य रागद्वेषलक्षणस्य विजयो निराकरण यत्राभिधीयते स लोकविजयः । ठाणा० ४४४ ।

लोकसन्ना-शब्दाद्यर्थगोचरा विशेषावबोधक्रियैव सञ्ज्ञायते अनयेति लोकसञ्ज्ञा-ज्ञानोपयोगः, अन्ये पुनः लोकदृष्टि-र्लोकसञ्ज्ञेत्याहुः । भग० ३१४ ।

लोकसार-अज्ञानाद्यसारत्यागेन लोकसाररत्नत्रयोद्युक्तेन भाव्यमित्येवमर्थं लोकसारः । ठाणा० ४४४ ।

लोकहेरी- । दश० २८३ ।

लोकाग्र-मुक्तिपदम् । उत्त० ५८९ ।

लोकान्तिकदेव-सारस्वत१आदित्य२वह्नि३वरुण४गर्दतोय५तुषित६अव्याबाध७मरुत८रिष्टाः ९ । ठाणा० ६२ ।

लोकानुभाव- । ठाणा० ११६ ।

लोकायतिक-नास्तिकवादी । प्रश्न० ३१ ।

लोकालोकः-लोके चतुर्दशरज्ज्वात्मके अलोको लोकालोकः । आचा० १७० ।

लोकोत्तराः- । आचा० १६७ ।

लोक्कइ लोक्यते-निश्चीयते । भग० २४९ ।

लोगंतितविमाणा- । ठाणा० ४३२ ।

लोगंतिता-लोकान्ते-लोकाग्रलक्षणे सिद्धस्थाने भवा लोकान्तिकाः । ठाणा० ४६३ ।

लोगंतिय-लोकस्य-ब्रह्मलोकस्य अन्ते-समीपे भवं लोकान्तिकं, लोकान्तिकं च देवः । भग० २७२ ।

लोगंतिया-लोकान्तिकाः । ज्ञाता० ४८३ । लोकस्य-ब्रह्मलोकस्यान्तः-समीप कृष्णराजीमध्यतं क्षेत्रं निवासो येषां ते लोकान्ते वा-औदयिकभावलोकावसाने भवा अनन्तरभवे मुक्तिगमनादिति लोकान्तिकाः-सारस्वतादयो उक्ता । ज्ञाता० ११७ । ब्रह्मलोककल्पे रिष्टविमानप्रस्तरे वासिनो देवाः । ज्ञाता० १५० ।

लोगंधकार-लोकान्धकारं । अन्धकारमेव । भग० २७० ।

लोगंधगारेति-लोके अयमेवान्धकारो नान्योऽस्तीदृश इति लोकान्धकारः । ठाणा० २१० ।

लोग-लोक्यतेति लोकः-प्राणिगणः । चतुर्दशरज्ज्वात्मकः प्राणिगणो वा । आचा० २२ । लोकः-प्राणिसङ्घातः । आचा० २३ । लोकः-अप्कायलोकः । आचा० ४४ । लोकः-अग्निकायलोकः । आचा ५१ । लोकः-लोक्यत इति लोकः-लोकालोकस्वरूपः । लोक्यत इति लोकः । लोकः-विशिष्टतिर्यङ्नरामररूपः । भग० ७ । लोकः-एकेन्द्रियादिप्राणिगणः । विशिष्टतिर्यग्नरामररूपः । सम० ३ । लोकस्य लोक्यते इति लोकः । सम० ३ । लोक्यते-दृश्यते केवलालोकेनेति लोकः-लोकालोकस्वरूपं वस्तु । सम० १८ । सञ्ज्ञिभव्यलोकः । भग० ८ । लोक्यते-केवलिना दृश्यत इति लोकः । अनु० २१६ । त्रयोदशसागरोपमस्थितिकं देवविमानम् । सम० २५ । लोकं-पञ्चास्तिकायात्मकम् । आव० ५०० । लोकः-लोकात् लभ्यं भिक्षामात्रादिकम् । पिण्ड० ९३ । लोकशब्देन लोकान्तः । विशे० ३७७ । लोक्यत इति लोकः-चतुर्दशरज्ज्वात्मकः । विशे० २१८ । लोकः-उत्कृष्टमतिः । राज० १०९ । प्राणिलोकः पञ्चास्तिकायात्मको वा । राज० १०९ । लोकः-मनुष्यलोकः । दश० चू० ३० । लोकः-तिर्यग्नरनारकनाकिलक्षणजीवलोकः । सम० १ । लोकः-सञ्ज्ञिभव्यलोकः । सम० ३ । लोकः-आत्मव्यतिरिक्तः धनपुत्रशरीरादिः । आचा० १७२ । लोकः-षड्जीवनिकायात्मकं कषायलोको वा । आचा० १७३ । लोकः-शरीरपुत्रदुहितृस्नुषाज्ञात्यादिः । आचा० १२६ । लोक्यत इति लोकः । दश० ७० । लोकः-रामायणादिः । दश० १११ । असंयतलोकः । आचा० २०७ । भगवत्याः

एकादशशतके दशम उद्देशकः । भग० ५११ । लोकः-लोक्यतेऽनेनेति लोकः-ज्ञानम् । आव० ७८९ । लोकः-लोकशास्त्रं तत्कृतत्वात् तदध्येयत्वाच्चार्थशास्त्रादिः । ठाणा० १७४ । भगवत्या द्वादशशतके सप्तम उद्देशकः । भग० ५५२ । लोकः-भव्यसत्त्वलोकः, प्राणिलोकः, देशनायोग्यो विशिष्टः, उत्कृष्टमतिर्भवतिर्भव्यसत्त्वलोकः पञ्चास्तिकायात्मको वा । जीवा० २५५ । लोकः-जन्म । प्रश्न० ८६ । लोकः-मनुष्यलोकः । आव० ५३८ । लोकः-श्रेण्या गुणितं प्रतरम् । अनु० १७३ । लोकः-उत्पत्तिस्थानं, देवगत्यादिपुण्यप्रकृत्युदयविषयतया लोक्यत इति । उत्त० १८२ ।

**लोगकंत**-देवविमानविशेषः । सम० २५ ।

**लोगकूड**-देवविमानविशेषः । सम० २५ ।

**लोगग्गचूलिआइ**-सम० २२ ।

**लोगट्ठिई**-लोकस्थितिः-लोकानुभावः । जीवा० ३२६ ।

**लोगट्ठिती**-लोकस्य-पंचास्तिकायात्मकस्य स्थितिः-स्वभावो लोकस्थितिः । ठाणा० ४७१ ।

**लोगठिती**-लोकस्थितिः-लोकव्यवस्था । ठाणा० १३२ ।

**लोगतमस**- । ठाणा० २१७ ।

**लोगतमिस्स**-लोकतमिस्रं-अन्धकारम् । भग० २७० ।

**लोगदव्व**-लोकस्यांशभूत द्रव्यं लोकद्रव्यम् । ठाणा० ३३ ।

**लोगनाह**-लोकस्य-संज्ञिभव्यलोकस्य नाथः-प्रभुर्लोकनाथः । भग० ८ । सम० ३ । लोकनाथः-संज्ञिभव्यलोकस्य योगक्षेमकारकः । भग० ७ । लोकस्य-भव्यलोकस्य नाथः-योगक्षेमकृत् लोकनाथः । जीवा० २५५ ।

**लोगनिक्कुड**-लोकनिष्कुटम् । प्रज्ञा० २३१ ।

**लोगनिक्खुड**-लोकनिष्कुटः । प्रज्ञा० ७७ ।

**लोगपईव**-लोकस्य-देशनायोग्यस्य विशिष्टस्य प्रदीपः-देशनांशुभिर्यथावस्थितवस्तुप्रकाशको लोकप्रदीपः । जीवा० २५५ । लोकस्य-विशिष्टतिर्यग्नरामररूपस्यान्तरतिमिरनिकरनिराकरणेन प्रकृष्टपदार्थप्रकाशकारित्वात्प्रदीप इव प्रदीपो लोकप्रदीपः । सम० ३ । भग० ८ ।

**लोगपज्जोअगर**-लोक्यते इति लोक इति व्युत्पत्त्या लोकालोकस्वरूपस्य समस्तवस्तुस्तोमस्वभावस्याखण्डमार्तण्डलमिव निखिलभावस्वभावावभासनसमर्थकेवलालोकपूर्वकप्रवचनप्रभापटलप्रवर्त्तनेन प्रद्योत-प्रकाशं करोतीत्येवंशीलो लोकप्रद्योतकरः । भग० ८ । सम० ३ ।

**लोगपज्जोयगर**-लोकस्य-उत्कृष्टमतेर्भव्यसत्त्वलोकस्य प्रद्योतनं प्रद्योतः प्रद्योतकत्वं-विशिष्टज्ञानशक्तिकरः । जीवा० २५५ ।

**लोगप्पदीव**-लोकप्रदीपः-विशिष्टतिर्यङ्नरामराणामन्तरतिमिरनिराकरणेन प्रकृष्टप्रकाशकारकः । भग० ७ ।

**लोगप्पभ**-देवविमानविशेषः । सम० २५ ।

**लोगबज्झ**-लोकबाह्यः-जनवर्जनीयः । प्रश्न० ६१ ।

**लोगमज्झावसाणिअ**-लोकमध्यावसानिकम् चतुर्थोऽभिनयविधिः । जं० प्र० ४१२ ।

**लोगमज्झावसाणिय**-चतुर्थोऽभिनयविधिः । जीवा० २४७ ।

**लोगमत्थयत्थ**-लोकमस्तकस्थः-त्रैलोक्योपरिवर्त्ती । दश० १५८ ।

**लोगय**-लोकं-स्थानम् । सूत्र० ७४ ।

**लोगरूव**-देवविमानविशेषः । सम० २५ ।

**लोगलेस**-देवविमानविशेषः । सम० २५ ।

**लोगवण्ण**-देवविमानविशेषः । सम० २५ ।

**लोगवत्ती**-लोकतप्तिः । आव० २६२ ।

**लोगवाओ**-लोकानां-पाखण्डिनां पौराणिकानां वा वादो लोकवादः-यथास्वमभिप्रायेणान्यथा वाऽभ्युपगमः । सूत्र० ४६ ।

**लोगविजओ**-लोकविजयः-आचारप्रकल्पे प्रथमश्रुतस्कन्धस्य द्वितीयमध्ययनम् । प्रज्ञा० १४५ । लोकविजयः-आचाराङ्गस्य द्वितीयमध्ययनम् । सम० ४४ । उत्त० ६१६ ।

**लोगविजय**-लोकविजयः-आचाराङ्गस्य प्रथमश्रुतस्कन्धे द्वितीयमध्ययनम् । आचा० ८३ । ठाणा० ४४४ ।

**लोगवित्त**-लोकवृत्त-आहारभयमैथुनपरिग्रहोत्कटसंज्ञात्मकम् । आचा० २०७ । लोकस्य-असंयतलोकस्य वित्तं-द्रव्यम् । आचा० २०७ ।

**लोगसण्णा**-मतिज्ञानाद्यावरणक्षयोपशमाच्छब्दार्थगोचरा विशेषावबोधक्रियैव संज्ञायतेऽनयेति लोकसंज्ञा । ठाणा० ५०५ । लोकसंज्ञा-स्वच्छन्दघटितविकल्परूपा लौकिका-

चरिता । आचा० १२ ।

लोगसन्ना-लोकसञ्ज्ञा-ओघसञ्ज्ञाविशेषावबोधक्रिया । ज्ञानोपयोग इति । लोकस्य हेया प्रवृत्तिर्या । प्रज्ञा० २२२ । लोकसञ्ज्ञा-विषयपिपासा संज्ञिता धनाद्याग्रहग्रहरूपा वा । आचा० १५८ ।

लोगसार-लोकस्य-चतुर्दशरज्ज्वात्मकस्य सारः-परमार्थो लोकसारः । आचाराङ्गप्रथमश्रुतस्कन्धे पञ्चममध्ययनम् । आचा० १६६ । ठाणा० ४४४ ।

लोगलिंग-देवविमानविशेषः । सम० २५ ।

लोगसिद्ध-देवविमानविशेषः । सम० २५ ।

लोगहिए-लोकस्य-एकेन्द्रियादिप्राणिगणस्य हितः-आत्यन्तिकतद्रक्षाप्रकर्षप्ररूपणेनानुकूलवर्ती लोकहितः । सम० ३ ।

लोगहिओ-लोकस्य-प्राणिलोकस्य पञ्चास्तिकायात्मकस्य वा हितोपदेशेन सम्यक् प्ररूपणाया वा हितः लोकहितः । जीवा० २५५ ।

लोगहिय-देवविमानविशेषः । सम० २ ।

लोगा-लोको-जन्मनि । प्रश्न० ८६ ।

लोगागासछिद्द-लोकाकाशच्छिद्रः । प्रज्ञा० ७७ ।

लोगाणुभाव-लोकानुभावः-लोकमर्यादा । ठाणा० २५३ ।

लोगातिता-तिणा । दश० चू० ६३ आ ।

लोगावत्त-देवविमानविशेषः । सम० २५ ।

लोगुत्तम-लोकस्य-तिर्यङ्नरनारकनाकिलक्षणजीवलोकस्योत्तमः-चतुस्त्रिंशद्बुद्धातिशयाद्यसाधारणगुणगणोपेततया सकलसुरासुरखचरनरनिकरनमस्यतया च प्रधानो लोकोत्तमः । सम० ३ । लोकस्य-भव्यसत्त्वलोकस्य सकलकल्याणैकनिबन्धनतया भव्यत्वभावेनोत्तमो लोकोत्तमः । जीवा० २५५ । लोकोत्तमः-भावलोकादेः प्रधानः । आव० ५७० ।

लोगुत्तर-लोकस्योत्तराः-साधवः, लोकस्य वोत्तरं-प्रधानं लोकोत्तरं-जिनशासनम् । अनु० २६ । लोकोत्तरः-लोकप्रधानः । दश० २३ ।

लोगुत्तरवडिंसग-देवविमानविशेषः । सम० २५ ।

लोगोवयारविणओ-लोकोपचारविनयः-लोकपङ्क्तिफलः, अर्थनिमित्त विनयश्च । उत्त० १७ । लोकोपचारविनयः-लोकप्रतिपत्तिफलः । दश० २४० । लोकानामुपचारो-व्यवहारस्तेन स एव वा विनयो लोकोपचारविनयः । ठाणा० ४०२ ।

लोगोविजओ-लोकविजयः-आचारश्रुतस्य द्वितीयो भेदः । आव० ६६० ।

लोगजत्ता- । नि० चू० प्र० १४३ अ ।

लोचकम्म-कूर्चमुण्डनादि । बृ० प्र० २९५ आ ।

लोचना-गुरुगुरुनः प्रकाशना । भग० ७२७ ।

लोट-मिनाकृतघो । दश० चू० ९९ ।

लोट्ट-लोट्टः-कूर्द्रिताः तद्गुणाः । ओघ० १३४ । लोट्टः-पिष्टः । दश० १८१ । नि० चू० १६६ अ । लोट्टः-कुक्कुटुकः । आव० ६२२ ।

लोट्टिय-कुमारकासनः हस्ती । ज्ञाता० ६३ । लोट्टितम् । विशे० ६३३ ।

लोढ-शिलापुत्रकम् । दश० १७२ । यद्वयं । ओघ० १६६ ।

लोढणी-यन्त्रविशेषः । ओघ० १६६ ।

लोण-लवणम् । आव० ६२० । ओघ० १३० । पृथिवीभेदः । आचा० २९ । लवणं-साम्भरिलवणम् । दश० ११८ । लवणं-सामुद्रादि । प्रज्ञा० २७ ।

लोणभाव-लवणभावः-क्षारभावः । आव० ५२२ ।

लोणित-सलवणम् । आव० ६० ।

लोद्दणक-उदकाश्रितजीवः । आचा० ४६ ।

लोद्ध-लोद्रः(ध्र)-वृक्षविशेषः । प्रज्ञा० ३२ । भग० ८०३ । लोध्रः-वृक्षविशेषः । ज्ञाता० ६५ ।

लोद्धयदिट्ठंतभाविया-लुब्धकदृष्टान्तभाविताः-श्रमणोपासके द्वितीयो भेदः । ठाणा० ११० ।

लोद्धया- । नि० चू० द्वि० ११ अ ।

लोभ-लोभे निश्रितं वणिक्प्रभृतीनामन्यथाक्रीतमेवेत्यक्रीतमित्यादि । दशविधमृषाभेदे चतुर्थः । ठाणा० ४८६ । लोभः-पिण्डदोषविशेषः । पिण्ड० १२१ । लोभः-गार्द्ध्यलक्षणः । जीवा० १५ । लोभः-मूर्च्छा । प्रश्न० ४२ । लोभः-चित्तविमोहनम् । प्रश्न० ९७ । तृष्णापरिग्रहपरिणामः । आचा० १७० । लोभनं-अभिकाङ्क्षणं लुभ्यते वाऽनेनेति लोभः । ठाणा० १९३ । द्रव्याद्यभिकाङ्क्षा । उत्त० २६१ । गार्द्ध्यमभिकाङ्क्षा । उत्त०

२९७ । नवमप्रस्थानकम् । ज्ञाता० ७५ । लोभः-अभिष्वङ्गः । दश० १८७ ।

लोभक्रिया-यल्लोभाभिभूतस्य मायतारम्भपरिग्रहेषु महत्सु प्रवर्त्तनम् । ठाणा० ३१६ ।

लोभणिज्जा-लोभनीयाः-वृद्धिजनकाः । उत्त० २२७ ।

लोभनन्दी- । भक्त० ।

लोभनिस्सिय-लोभनिसृता-मृषाभाषाभेदः । दश० २०१ ।

लोभवत्तिए-लोभप्रत्ययः । द्वादशं क्रियास्थानम् । सम० २५ ।

लोभसन्ना-लोभोदयाल्लोभसमन्विता सचित्तेतरद्रव्यप्रार्थनैव सञ्ज्ञायतेऽनयेति लोभसञ्ज्ञा । भग० ३१४ ।

लोभहृतः- । भक्त० ।

लोभहेतोः वधाद्विरतः । आचा० १६४ ।

लोभातिरेग-लोभातिरेकः-लोभाभिप्रायः । ओघ० १९३ ।

लोभिल्ल-लोभवान् । ओघ० ९८ ।

लोभंथिय-मल्लः । नटः । आव० ४२६ ।

लोम-आहारभेदभिन्नः । ठाणा० ९३ । लुनं लोयते वा तेषु यूका इति लोमानि । उत्त० २५४ ।

लोमठिक-कोकन्तिकः । आरण्यजीवविशेषः । जीवा० ३८ ।

लोमपक्खी-लोमात्मको पक्षौ विद्येते यस्य सः लोमपक्षी । जीवा० ४१ । लोमपक्षी-लोमात्मकौ पक्षौ लोमपक्षौ तद्वन्तः । प्रज्ञा० ४९ । लोमपक्षी-हंसादिः । ठाणा० २७३ । लोमपक्षी । सम० १३५ ।

लोमपक्षः-लोमात्मकः पक्षः लोमपक्षः । प्रज्ञा० ४९ ।

लोमसिया-चिर्भटिका । आव० ४१७ ।

लोमसियाओ-त्रपुष्यः । नि० चू० द्वि० १५१ अ ।

लोमसी-त्रपुषी । नि० चू० प्र० ३ अ ।

लोमहत्थ-लोमहस्तकः-मयूरपिच्छपुञ्जनिकः । जं० प्र० ८२ । लोमहस्तकं-मयूरपुच्छपुञ्जनिकः । राज० ९६ ।

लोमहत्थग-लोमहस्तकः-मयूरपिच्छपुञ्जनिकः । जीवा० २३४ ।

लोमहत्थचंगेरी-लोमहस्तचङ्गेरी-मयूरपिच्छपुञ्जनिका चंङ्गेरी । जीवा० २३४ ।

लोमहत्थय-लोमहस्तकम् । जीवा० २५६ ।

लोमहरिस-रोमहर्षः-रोमोद्गमः । जीवा० १८७ । लोमहर्षः-रोमोद्गमः । प्रज्ञा० ८१ । भयविकारः । ठाणा० ४११ ।

लोमहार-प्राणहारः । उत्त० ३१२ । लोमं-रोमं हरति-अपनयति प्राणिनां यः सः । उत्त० ३१२ ।

लोमावहार-लोमान्यपहरति यः स लोमापहारः । निःशूकतया भयेन परप्राणान् विनाश्यैव मुष्णाति यः सः लोमावहारः । प्रश्न० ४६ ।

लोमाहार-लोमाहारः-मल्वोघतो वर्षादिषु यः पुद्गलप्रवेशः स मूत्राद् गम्यत इति । भग० २७ । लोमभिराहारः लोमाहारः । प्रज्ञा० ५८७ ।

लोय-लोकः-बाह्य अभ्यन्तरश्च, तत्र बाह्यो धनहिरण्यमातृपित्रादिः, आन्तरस्तु रागद्वेषादिस्तत्कार्यं वा अष्टप्रकारं कर्म । आचा० १४५ । असंयतलोकः । आचा० १४४ । इन्द्रियानुकूलं रसाद्युपेतमुच्यते । आचा० ३३६ । लोकः-गृहस्थलोकः । आचा० १४८ । लोकः-भूतग्रामः । आचा० १६१ । लोकः-यथावस्थितजन्तुलोकः, तदाधारं वा क्षेत्रम् । आचा० १५४ । ज्ञाता० ६० । लोकः-षड्जीवनिकायः । आचा० १५३ । लोकः-पञ्चास्तिकायात्मकः-लोक्यते-प्रमीयत इति लोक इति व्युत्पत्त्या लोकालोकरूपः । ठाणा० ३६ ।

लोयइ-रोचते । वृ० द्वि० २८३ अ ।

लोयग-लोवगं-निर्गुंपामक्षनादि । वृ० द्वि० १७८ अ ।

लोयग्गं-लोकाग्रं लोकाग्रे वर्त्तमानत्वात् । प्रज्ञा० १०७ । लोकाग्रं-ईषत्प्राग्भारस्थम् । आव० ७८९ ।

लोयग्गथूभिया-लोकाग्रस्तूपिका-लोकाग्रस्य स्तूपिकेव । ईषत्प्राग्भाराया नवमं नाम । प्रज्ञा० १०७ ।

लोयग्गपइट्ठाण- । ज्ञाता० १८५ ।

लोयग्गपडिवाहिणी-लोकाग्रप्रतिवाहिनी लोकाग्रेण प्रत्यूह्यत इति । ईषत् प्राग्भाराया दशमं नाम । प्रज्ञा० १०७ ।

लोयट्ठिई-लोकस्थितिः लोकव्यवस्था । भग० १८६ ।

लोयणा-लोचना-सर्वकामविरक्तताविषये देवलासुतराज्ञी । आव० ७१४ ।

लोयनाभी-लोकस्य-तिर्यग्लोकस्य स्थालप्रख्यस्य नाभि-

रिव-स्थालमध्यगतसमुद्गवृत्तचन्द्रक इव लोकनाभिः । सूर्य० ७८ ।

लोयफूड-लोकेन-लोकाकाशेन सकलस्वप्रदेशैः स्पृष्टो लोकस्पृष्टः । भग० १५१ ।

लोयमज्झ-लोकस्य-तिर्यग्लोकस्य समस्तस्यापि मध्ये वर्त्तते इति लोकमध्यः । सूर्य० ७८ ।

लोयमेत्त-लोकमात्र-लोकपरिमाणम् । भग० १५१ ।

लोयसंजोग-लोकसयोग-लोकेनासंयतलोकेन संयोगः-सम्बन्धः ममत्वकृतः । आचा० १४४ ।

लोयाणी-साधारणबादरवनस्पतिकायविशेषः । प्रज्ञा० ३४ ।

लोयाणुभाव-लोकानुभावः-लोकप्रभावः । भग० १८६ ।

लोयायय-लोकायतः-नास्तिकवादी । दश० ५१ ।

लोयावादी-लोकः-प्राणिगणस्तं वदितुं शीलमस्येति लोकवादी । आचा० २२ । लोकः-चतुर्दशरज्ज्वात्मकः प्राणिगणो वा तत्रापतितुं शीलमस्येति लोकापाती । आचा० २२ ।

लोल-रत्नप्रभानरके नरकावासः । ठाणा० ३६५ । लोलः-व्रते चञ्चलः । प्रश्न० १२० । लोलः-चञ्चलः । ठाणा० ३७३ । लोलः-यद् भूमौ करे वा प्रत्युपेक्षमाणवस्त्रस्य लोलनम् । उत्त०५४१। लोलः-अप्राप्तप्रार्थनपरः (भिक्षुः) । दश० २६८ ।

लोलइ-लोलयति-लोटते । पिण्ड० १२४ ।

लोलग-चुलिगो । नि० द्वि० १४ आ ।

लोलति-लुठति । आव० ३५८ ।

लोलयति-कलुषयति । बृ० ५५ अ ।

लोलया-लोलता । आव० ४२१ ।

लोलयासढे-लोलता-पिशितादिलाम्पट्यं तद्योगाज्जन्तुरपि तन्मयत्वख्यापनार्थं लोलतेत्युक्तः शाठ्ययोगाच्छठः-विश्वस्तजनवञ्चकः । उत्त० २८० ।

लोला-भूमौ लोलते हस्ते वा पुनः पुनर्लोलयति प्रत्युपेक्षयन् । ओघ० ११० । लोलयति प्रत्युपेक्षमाणः । ओघ० ११० । लोलत इति, चञ्चला (प्रत्युपेक्षणा) । ओघ० ११० । लोलाः-लम्पटाः । उत्त० ५९० ।

लोलिक्कं-लौल्यं-मथमंद्वारस्याष्टमं नाम । प्रश्न० ४३ ।

लोलियं-लोठितम् । आव० १०२ ।

लोलिया-लौल्यम्-लोलुप्यम् । आव० ८३१ ।

लोलुए-रत्नप्रभानरके नरकावासः । ठाणा० ३६५ ।

लोलुप्पमान-लालप्यमानम् । उत्त० ४०० ।

लोलेंति-लोलयति । आव० ६५१ ।

लोट्ठ- । ठाणा० ५०७ ।

लोष्टक-मृतपिण्डः । नंदी० १५० ।

लोष्टकप्रधान-वर्त्तकवरः । भग० ७६७ ।

लोह-लोभक्रिया-लोभाय यत्करणं, क्रियाया द्वादशमो भेदः । आव० ६४८ । लब्धवस्तुविषयगृद्धयात्मकम् । उत्त० ६६४ । भग० ८०४ ।

लोहकंटिया-संडासओ । नि० चू० द्वि० १८ आ ।

लोहकडाह-लोहकटाहं-कवेल्ली । भग० २३८ ।

लोहकडाहि-लोहमयं बृहत्कडिल्लम् । अनु० १५६ ।

लोहकर्तृ- । आचा० १७४ ।

लोहकारा- । नि० चू० द्वि० ४३ आ ।

लोहकाराम्बरीषः-लोहकारकोष्ठकः । जीवा० १२४ ।

लोहग्गल-राजधानी यत्र जितशत्रू राजा । आव० २१० । लोहार्गलः-नगरविशेषः, वज्रजङ्घराजधानी । आव० १४६ ।

लोहग्गलणगरसामी-लोहार्गलनगरस्वामी वज्रजङ्घनामराजा । आव० ११६ ।

लोहजंघ-द्वितीयः प्रतिवासुदेवः । सम० १५४ । लोहजङ्घः-प्रद्योतस्य लेखहारकः । प्रथमं रत्नम् । आव० ६७३ ।

लोहदंड-लोहदण्डम् । आव० ६८३ ।

लोहनिस्सिया-लोभनिसृता-यल्लोभाभिभूतः कूटतुलादि कृत्वा यथोक्तप्रमाणमिदं तुलादीति वदतो भाषा । प्रज्ञा० २५६ ।

लोहप्पा-लोभात्मा-लोभस्वभावः । परिग्रहस्य त्रयोदशम नाम । प्रश्न० ९२ ।

लोहबद्ध-लोहवर्धः, अयश्चर्मरज्जुकः । ज० प्र० २११ ।

लोहसंकला-लोहसङ्कला । प्रश्न० ५६ ।

लोहसंघाडय-लोहशृङ्गाटकम् । आव० ६७१ ।

लोहसन्ना-लोभवेदनीयोदयतो लालसत्वेन सचित्तेतरद्रव्यप्रार्थना लोभसञ्ज्ञा । प्रज्ञा० २२२ ।

लोहा-लोभा-लोभानुगता । आव० ५४८ ।

लोहारओ-लेखहारकः-दूतः । आव० ६७३ ।

लोहारकुट्टी-आसेवेसणं । नि० चू० द्वि० ६६ आ ।

लोहारघर-लोहकारगृहम् । आव० २२४ ।

लोहारवरिसा-लोहाकारस्याम्वरीषा-भ्राष्ट्रा आकरणानीति लोहाकाराम्बरीषा । ठाणा० ४१९ ।

लोहार्यगोतम-अन्येनापि भक्तिकर्तव्ये दृष्टान्तः । व्य० द्वि० १७२ आ ।

लोहि-कन्दविशेषः । उत्त० ६९१ । लोही-मण्डनकादिपचनिका कविल्ली । अनु० १५९ ।

लोहिअक्ख-पद्मरागः । जं० प्र० ४८, २० ।

लोहिअक्खमणी-लोहिताक्षमणिर्नाम रत्नविशेषः । जं० प्र० ३४ ।

लोहिच्च-लोहित्यं-लोहित्यायनम् । आर्द्रागोत्रम् । जं० प्र० ५०० ।

लोहिच्चायणसगोत्त-लोहित्यायनसगोत्रम् । सूर्य० १५० ।

लोहिणी-साधारणबादरवनस्पतिकायविशेषः । प्रज्ञा० ३४ ।

लोहितंक-लोहिताङ्कः- त्यकः । सूर्य० २९४ ।

लोहितक्ख-चमरेन्द्रस्य महिषानीकस्याधिपतिदेवविशेषः । ठाणा० ३०२ । लोहिताक्षकाण्ड-चतुर्थं लोहिताक्षानां विशिष्टो भूभागः । जीवा० ८९ ।

लोहितक्खमणी-लोहितक्षमणिः-रत्नविशेषः । जीवा० १९१ । लोहिताक्षमणिः-लोहिताक्षनामारत्नविशेषः । प्रज्ञा० ३६१ ।

लोहितक्खरयणपडिसेओ-लोहिताक्षरत्नप्रतिषेकः। जीवा० २३४ ।

लोहितपाणी-लोहितो पाणी-अग्रिमो पादो लोहितपाणी । ज्ञाता० ६७ ।

लोहितपूयपाई-लोहितं-रुधिरं पूयं - रुधिरमेव पक्वं ते द्वे अपि पक्तुं शीलं यस्या सा लोहितपूयपाचिनी कुम्भीविशेषः । सूत्र० १३३ ।

लोहितशालि- । उत्त० ३१७ ।

लोहिताक्ष-रत्नविशेषः । जीवा० २३ ।

लोहियंक-लोहिताङ्कः-अष्टाशीतौ महाग्रहे तृतीयः । जं० प्र० ५३४ ।

लोहियक्ख-लोहिताक्षं-रत्नविशेषः । प्रज्ञा० ९१ । लोहिताक्षः-पृथिवीभेदः । मणिभेदः । आचा० २९ । अष्टाशीतौ महाग्रहे तृतीयः । ठाणा० ७८ । लोहिताक्षो मणिभेदः । प्रज्ञा० २७ । लोहिताक्षो-मणिभेदः । उत्त० ६८९ । लोहिताक्षरत्नः । ज्ञाता० ३१ ।

लोहियक्खकूड-लोहिताक्षकूटं लोहितरत्नवर्णत्वात् । गन्धमादनवक्षस्कारपर्वते षष्ठः कूटः । जं० प्र० ३१३

लोहियगंगा- । भग० ६७४ ।

लोहियपत्ता-चतुरिन्द्रियजन्तुविशेषः । जीवा० ३२ । प्रज्ञा० ४२ ।

लोहियपाणि-लोहितो रक्तो रक्ततया पाणि-हस्तो यस्य स तथा । ज्ञाता० २३८ ।

लोहिया-गोत्रविशेषः-कौशिकगोत्रस्य एकशाखा । ठाणा० ३९० ।

लोही-वनस्पतिजीवविशेषः । आचा० ५७ । लोहीमण्डकादिपचनिका । भग० २३४ । लोही-अनन्तकायभेदः । भग० ३०० । भग० ८०४ । लोही-लोढोतिप्रसिद्धः । आव० ६५१ ।

लोहीलो-कवल्ली । नि० चू० प्र० ३१७ अ ।

लोहीसंठितो-लोहीसंस्थितः-आवलिकाबाह्यस्य चतुर्थं संस्थानम् । जीवा० १०४ ।

लौही-वनस्पतिकायिकभेदः । जीवा० २७ ।

ल्हसति- । नि० चू० प्र० १२१ अ ।

ल्हसना- । व्य० द्वि० १० आ ।

ल्हसिय-म्लेच्छविशेषः । प्रज्ञा० ५५ ।

ल्हसुण-लसुनकन्दः-वनस्पतिविशेषः । प्रज्ञा० ३७ ।

ल्हादि-ल्हादनं-औणादिक 'इ' प्रत्ययः प्रल्हत्ति । व्य० प्र० ६३ अ ।

ल्हासिव-ल्हासिकः-चिलातदेशनिवासीम्लेच्छविशेषः। प्रश्न० १४ ।

ल्हासिया- । भग० ४६० ।

## व

वंक-वक्रः-असंयमः कुटिलः । आचा० ६४ । वङ्कं-वक्रम् । भग० ३०८ । वङ्कः-वक्रः, फलादौ विपरीतः,

कुटिलः । ठाणा० १८३ । वक्रः-असंयतः । व्य० प्र० ८ आ । वङ्कं-वक्रम् । आव० ६४२ । वङ्को-वक्रः । ज्ञाता० १५७ । वक्रः वचसा । उत्त० ६५६ ।

वंकगती-वङ्का-वक्रा सा चासौ गतिश्च वङ्कगतिः (?)

वंकड-वक्रम् । उत्त० ५४८ ।

वंकणया-वङ्कनता-वक्रीकरणं, वञ्चनता । ठाणा० ४२ ।

वंकति-वक्तव्यति बाधयतीत्यर्थः । व्य० द्वि० १२५ आ ।

वंकसमायार-क्रियया वक्रसमाचारः । उत्त० ६५६ । वक्रसमाचारः-असंयमानुष्ठायी । आचा० ६४ ।

वंका-वक्रा । प्रज्ञा० ३२६ ।

वंकानिकेया-वङ्कस्य-असंयमस्य आ-मर्यादया संयमावधिभूतया निकेतभूता, आश्रया, वङ्को वा निकेतो येषां ते वङ्कानिकेता । आचा० १८४ ।

वंकुड- । आव० ७२१ ।

वंग-त्रपुकम् । प्रश्न० १५२ । व्यङ्गं-सखाञ्छनम् । भग० ३०८ । देशविशेषः । भग० ६८० । वङ्गाः-जनपदविशेषः । प्रज्ञा० ५५ ।

वंगुड-कर्पूरः । नि० चू० द्वि० १२४ अ ।

वंगुरिते-उद्घाट्यताम् । बृ० द्वि० २५ आ ।

वंचण-वञ्चनं वस्तस्यान्यमातरि योजनम् । प्रश्न० ३८ । वञ्चनं-प्रतारणम् । ज्ञाता० ७६ । वञ्चनं-प्रतारणम् । ज्ञाता० २३८ । वञ्चनं-प्रतारणम् । सूर्य० ३२९ ।

वंचणया-वञ्चनता-प्रतारणम् । ओघ० ८१ ।

वंचणा-वञ्चना । अधर्मद्वारस्यैकादशमं नाम । प्रश्न० २६ ।

वंचना-तनुमाया । उ० मा० गा० ४५६ ।

वंचेइ-वञ्चति-पल्युञ्चति । आव० ६६२ ।

वंजण-व्यज्यतेऽर्थोऽनेनेति व्यञ्जनम् । विशे० ९१८ । व्यञ्जनाः-शब्दपुद्गलसंघातः । विशे० १३६ । व्यञ्जनं-मषतिलकादिकम्, पश्चाद् भवं व्यञ्जनम् । भग० ११६ । व्यञ्जनं-मषीतिलकादि । जं० प्र० ११३ । व्यञ्जनं-अक्षरम् । भग० ६ । व्यञ्जनं-तीमनादिपत्रशाकं । पिण्ड० १७ । व्यञ्जनं-शालनकम् । तक्रं तक्रादि वा । भग० ३२६ । व्यञ्जनं-उपकरणेन्द्रियम् । नंदी० १६६ । व्यंजनं-उपस्थरोमम् । व्य० द्वि० ४५३ आ । व्यञ्जनं-मषतिलकादि । ज्ञाता० ११ । व्यञ्जनं-व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं-तच्चोपकरणेन्द्रियं शब्दादिद्रव्यपरिणतद्रव्यसङ्घातो वा । ठाणा० ५१ । व्यञ्जनं-इन्द्रियशब्दादिद्रव्यसम्बन्धः । ठाणा० ५१ । व्यञ्जनं-मषादि । ठाणा० ४२८ । व्यञ्जनं-अर्थज्ञापकः, सम्बन्धः । नंदी० १६८ । व्यञ्जनं-उपकरणेन्द्रियम् । नंदी० १६९ । व्यञ्जनं-भाष्यमाणाकारादिवर्णजातम् । नंदी० २८८ । व्यञ्जनं-मषतिलकादिः । अनु० १५७ । व्यञ्जनं-तिम्मनं । ओघ० १३३ । व्यञ्जनं-तक्रप्राकादिकम् । पिण्ड० १७१ । व्यञ्जनं-मषतिलकादिः । ठाणा० ४६१ । व्यंजयतीति व्यंजणं तं च अक्खरं । नि० चू० प्र० ९ आ । पच्छाजायं । नि० चू० तृ० ६१ अ । अर्थाभिव्यञ्जकत्वाद्वा पदम् । बृ० तृ० १३० अ । मसादिकं वंजणं, अहवा पच्छा समुप्पण्णं-वंजणं । नि० चू० द्वि० ८५ आ । परस्परं सम्बन्ध उपकरणेन्द्रियशब्दादिपरिणतद्रव्यसम्बन्धः एष तावद् व्यञ्जनमुच्यते । विशे० ११७ । शब्दादिपरिणतद्रव्यनिकुरम्बमपि व्यज्यमानत्वाद् व्यञ्जनम् । विशे० ११७ । व्यञ्जनं-शब्दम् । विशे० ११२६ । व्यञ्जनं-मषादि । आव० ६६० । व्यञ्जनं-प्रशस्ततिलकादि । उत्त० ४८६ । व्यञ्जनं-तिलकमषकादि । सम० १५७ । व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं, तच्चोपकरणेन्द्रियं शब्दादिपरिणतद्रव्यसङ्घातो वा । भग० ३४४ । इन्द्रियेणाऽप्यर्थस्य व्यज्यमानत्वाद् व्यञ्जनम् । विशे० ११७ । व्यञ्जनं व्यज्यते-आविष्क्रियतेऽर्थोऽनेनेति व्यंजनं-शब्दः । आचा० २०२ । व्यञ्जनं-शब्दः । सूत्र ५ । व्यञ्जनं-तिलकमषादिकम् । सूत्र० ३१८ । व्यञ्जनं-मषतिलकादि । जीवा० २७४ । व्यञ्जनं-तक्रादि शालनकं वा । प्रश्न० १५३ । व्यञ्जनं-द्रव्य । (?) । व्यञ्जनं शब्दः । आव० ६०७ । व्यञ्जनं-शब्दः । आव० २८४ । व्यज्यतेऽनेनार्थ इति व्यञ्जनं तच्च उपकरणेन्द्रियस्य शब्दादिपरिणतद्रव्याणां च यः परस्परं सम्बन्धः । प्रज्ञा० ३११ । व्यञ्जनं-त्रिविधप्रत्याख्यानचिन्तायां चतुर्विध इत्येवमादि । आव० ८५१ । व्यञ्जनं-पुद्गलः । आव० ४६२ । व्यञ्जनं-द्रव्यम् । आव० ४६३ । व्यञ्जनं-मषादिव्यञ्जनफलोपदर्शकं शास्त्रम् । सम० ४९ । व्यञ्जनं शालनकं तक्रादि । सूर्य० २९३ । व्यजनं-तिलकमषादि ।

वायप्पभ-पञ्चसागरोपमस्थितिकं देवविमानम् । सम० १० ।

वायफलिहा-वातोऽत्रापि वात्या तद्वद्वातविभ्रत्वात् परिघश्च दुर्लङ्घ्यत्वात् सा वातपरिघः, कृष्णराजिनाम । भग० २७१ ।

वायमंडलिया-वातमण्डलिका-वातोली । भग० १९६ । वातमण्डली-वातोली । प्रज्ञा० ३० ।

वायर-विहारः । नि० चू० प्र० १४६ आ ।

वायालिय-व्यालैश्चरतीति वैयालिकः । प्रश्न० ३७ ।

वायलेस-पञ्चसागरोपमस्थितिकं देवविमानम् । सम० १० ।

वायवण्ण-पञ्चसागरोपमस्थितिकं देवविमानम् । सम० १० ।

वायविक्खलिअं-वाग्विस्खलितं-लिङ्गभेदादिस्खलितम् । दश० २३६ ।

वायव्व-वायुर्देवता वायव्या दिग् । भग० ४९३ । वायव्यः-वायुरस्यास्तीति वायवो वातिकः । विपा० ३५ ।

वायव्वा-षष्ठी दिशा । ठाणा० १३३ । वायवो । आव० २१५ ।

वायस-वायसः-काकः-लोमपक्षिविशेषः । जीवा० ४१ । वायसः-चलचित्तः, काकः । आव० ७९८ । लोमपक्षिविशेषः । प्रज्ञा० ४९ ।

वायसपरिमंडल-वायसादीनां पक्षिणां यत्र स्थानदिक्स्वराश्रयणात् शुभाशुभफलं विन्द्यते तत् वायसपरिमण्डलम् । सूत्र० ३१९ ।

वायसयविहंग-वायसविहंगः-काकविहङ्गः । प्रश्न० ८ ।

वायसिग-पञ्चसागरोपमस्थितिकं देवविमानम् । सम० १० ।

वायसिट्ठ-पञ्चसागरोपमस्थितिकं देवविमानम् । सम० १० ।

वायस्सिओ-वागाश्रितः । आव० ६७९ ।

वाया-वाचा-अभिलापः । आव० ५२४ ।

वायाइद्धं-अकालेनैव शुष्कं सङ्कुचितम् वलीभृतम् । ओघ० २११ ।

वायाम-लगुडिभमाडणं, उवलयकट्टणं । नि० चू० प्र० ९८ अ । व्यायामः-तिर्यक्प्रसारितोभयबाहुप्रमाणो मानविशेषः । जं० प्र० २४२ । व्यायामः-व्यापारः । ठाणा० २० ।

वायामण-वायामनं-व्यायामकरणम् । जीवा० १२२ ।

वायायण- । बृ० प्र० १६५ अ ।

वायावत्तं-पञ्चसागरोपमस्थितिकं देवविमानम् । सम० १० ।

वायाविद्ध-वाताद्दिग्धं अर्वाक् शुष्कम् । बृ० द्वि० २४४ आ ।

वायाविरिय-वाग्वीर्यं-वाचिवीर्यं-वाचालता । उत्त० २६७ ।

वायाहड-वाताहृतः-आकस्मिकः । बृ० तृ० १३३ अ । वाताहृतः-आगन्तुकशंक्षः । बृ० तृ० ३६ आ ।

वायाहयग-वाताहतं वायुनेषच्छोषमानीतम् । उपा० ४२ ।

वायु-वायुः-पञ्चममुहूर्तनाम । सूर्य० १४६ ।

वायुभक्खिणो- । निरय० २५ ।

वायुभूति-वायुभूतिः-चमरस्य विकुर्वणाविषयकोद्देशके अनगारः । भग० १५६ ।

वायूपक- । व्य० द्वि० २४१ आ ।

वारंवारेण- । ज्ञाता० २१३ ।

वार-पङ्कप्रभायां महानारकः । ठाणा० ३६५ । वारः । आव० ५५९ । वेला । आव० ५१४ । वारः-हस्तच्युतः । निरय० १८ । वारकः । बृ० प्र० २१९ आ ।

वारए-वारकः-अशुद्धपाठनिषेधकः । भग० ११२ । वारकोऽशुद्धपाठनिषेधकः । ज्ञाता० ११० । वाराकः-गडुकः । उपा० ४० ।

वारओ-वारकः । आव० ६३ । वारको-प्रश्रवणव्युत्सर्जनान्तरमुदकस्पर्शनार्थं भाजनम् । बृ० द्वि० २५३ आ ।

वारक-लघुघटः । नंदी० ६२ । अनु० १५२ । गडुः । जं० प्र० ५७ । वारकः । आव० १०३ । वारकः-लघुघटः । पिण्ड० ९० । वारकः । बृ० द्वि० ६१ अ ।

वारग-परिवाडी । नि० चू० प्र० ७२ आ । वनस्पतिविशेषः । प्रज्ञा० ३३ । वारकः-मरुदेशप्रसिद्धनामा माङ्गल्यघटः । जं० प्र० १०१ ।

वारडिय रंगयुक्तानाम् । ग० ।
वारण-दोषेभ्यो निवारणम् । ओघ० १५८ ।
वारणा-वारणं-निषेधः, प्रतिक्रमणस्य चतुर्थं नाम । षड्भेदभिन्नं प्रतिक्रमणमेव । आव० ५५२ । वारणा-अनाचारस्य प्रतिषेधनम् । व्या० द्वि० ७२ अ ।
वारत्त-सवेग उदाहरणम् । आव० ७०१ । वारत्रः-अन्तकृद्दशानां षष्ठवर्गस्य नवममध्ययनम् । अन्त० १८ ।
वारत्रकः-संवेगोदाहरणेऽभयसेनामात्यः । आव० ७०१ ।
वारत्तक-महर्षिविशेषः । बृ० प्र० ३०६ आ । छर्दितदोषदृष्टान्तेऽमात्यः । पिण्ड० १६६ ।
वारत्तग-वारत्तपुरं नगरं, तत्थ य अभयसेणो राया तस्स अमच्चगो । नि० चू० तृ० ५४ अ ।
वारत्तयलीए- । नि० चू० द्वि० १०९ आ ।
वारत्तपुरं-वारत्रकपुरं-संवेगोदाहरणे नगरम् । आव० ७०१ । छर्दितदोषदृष्टान्ते नगरम् । पिण्ड० १६९ । अभयसेणरायनगरं । नि० चू० तृ० ५४ आ ।
वारधोअण-वारकधावनं-गुडघटधावनम् । दश० १७७ ।
वारन्नक-रजोहरणमुखपोतिकादिलिङ्गधारी । बृ० प्र० २७६ आ ।
वारवार-वारंवारः । आव० १४३ ।
वारवाण-कञ्चुकः । भग० ४६० ।
वाराणसी-पुरीविशेषः । उत्त० ३७६ ।
वाराह-पञ्चमबलदेवपूर्वभवनाम । सम० १५३ । वाराहः-आनन्दबलदेवपूर्वभवः । आव० १६३ टी० ।
वारि-पानीयम् । उत्त० ५०६ ।
वारिओ-वारितः । आव० ४२० । वारितः-अहितान्निवर्त्तितः । आव० ७९३ ।
वारिप्पवेसण-वारिप्रवेशनं-जले क्षेपः । प्रश्न० २२ ।
वारिबंध-हत्थिग्गहणी । नि० चू० प्र० २७५ अ ।
वारिभद्दगा-वारिभद्रकाः-अब्भक्षाः शैवलाशिनो नित्यं स्नानपादादिधावनाभिरता वा । सूत्र० १५४ ।
वारिमज्झच्छूढ-वारिमध्यक्षिप्तः । आव० ३४६ ।
वारिसेण- । ठाणा० ४७९ । ऐरवते तीर्थकृत् । सम० १५३ । वारिषेणः-अन्तकृद्दशानां चतुर्थवर्गस्य मध्यममध्ययनम् । अन्त० १४ । वारिषेणः-अनुत्तरोपपातिकदशानां प्रथमवर्गस्य पञ्चममध्ययनम् । अनुत्त० १ ।
वारिसेणा-वारिषेणा-वापीनाम । जं० प्र० ३७० । चतुर्थी शाश्वतजिनप्रतिमा । ठाणा० २३० । वारिषेणा-वारिषेणप्रतिमा । जीवा० २३८ । सप्तमी दिक्कुमारी महत्तरिका । जं० प्र० ३८८ । वारिषेणा-दिक्कुमारीनाम । जं० प्र० ३५६ । वारिषेणा-ऊर्ध्वलोकवास्तव्या दिक्कुमारी । आ० (?) ।
वारी-गजबन्धनम् । मर० । हस्तिपाशविशेषः । ओघ० १५६ ।
वारीवसभ-वारीवृषभो-प्रवहणम् । आव० ५०८ ।
वारुण-वारुणः-वारुणसमुद्रः । जीवा० १९८ । आर्द्रामूलादिनक्षत्रप्रभवम् । अनु० २१६ । वारुणः । जं० प्र० ४९१ ।
वारुणि-सुविधिनाथस्य प्रथमशिष्या । सम० १५२ । सुरा । ठाणा० २८८ ।
वारुणिवर-वरवारुणी । जीवा० ३५० ।
वारुणी-पश्चिमा दिशा । ठाणा० १३३ । वरुणो-देवता, वारुणीदिग् । भग० ४९३ । वापीनाम । जं० प्र० २७१ । उत्तररुचकवास्तव्या चतुर्थी दिक्कुमारी महत्तरिका । जं० प्र० ३९१ । पश्चिमदिक् । आव० २१५ । व्यक्तमाता । आव० २५५ । वारुणी-उत्तररुचकवास्तव्या दिक्कुमारी । आव० १२२ । सुरा । आव० ७९८ ।
वारुणोद-वारुणीरसास्वादसमुद्रविशेषः । अनु० ९० ।
वारुणोदय-वारुणसमुद्रः । प्रज्ञा० २८ ।
वारेज्ज-विवाहः । अनु० १३८ ।
वार्त्तिक-यदेकस्मिन् पदे यदर्थापन्नं तस्य सर्वस्यापि भाषणम् । बृ० प्र० ३२ आ ।
वार्द्धकि- । आचा० १०६ ।
वार्द्धानी-गलन्तिका । जीवा० २६६ ।
वालंभा-वागलोलइया । नि० चू० प्र० २२४ आ ।
वाल-व्यालः । नि० चू० प्र० ३२ अ । पालः-श्वापदभुजगः । भग० १२१ । वालः-केशः । नंदी० १६५ । वालः-चमर्यादिनाम । दश० १९३ । व्यालः-श्वापदः । ज्ञाता० ७८ । व्यालः-श्वप्रभृतिका । व्य० द्वि० १५९

अ । दुष्टसर्पः । बृ० द्वि० ९ अ । व्यालः । आव० २७३ । व्यालः-सर्पः । विशे० ८४३ । व्यालः-श्वापदभुजङ्गः । राज० २८ । व्यालः-श्वापदभुजङ्गः । ज्ञाता० १४ । वालः-केशः । प्रश्न० ८ । व्यालः-श्वापदभुजङ्गलक्षणः । भग० ४७१ । व्यालः-चिरोजः । जीवा० २७४ । उण्णियवासाकप्पेण पाउतो अहति । नि० चू० प्र० ३५४ अ ।

वालगंड-वालगण्डं-चामरम् । जं० प्र० ५२९ ।

वालग-व्यालः-श्वापदभुजगः । जीवा० १९९ । गवादिवालधिवालनिष्पन्नचालनकः । सुवर्णकागृहको वा । आव० ३४७ (?) ।

वालग्ग-वालाग्रम् । भग० २७५ । वालाग्रं-कुरुनररोमम् । जं० प्र० ९५ ।

वालग्गकोडी-वालाग्रकोटी-वालेषु विदेहनरवालाद्यपेक्षया सूक्ष्मत्वादिलक्षणोपेततयाऽग्राणि-श्रेष्ठानि वालाग्राणि कुरुनररोमाणि तेषां कोट्यः-अनेकाः कोटाकोटीप्रमुखाः सङ्ख्याः । जं० प्र० ९५ ।

वालग्गपोइया-वालाग्रपोतिका-जलस्योपरिप्रासादः । जं० प्र० १२१ । (देशीपदं) वलभीवाचकम् । उत्त० ३१२ ।

वालग्गपोतिआसंठिओ-वालाग्रपोतिकासंस्थितः तडागोपरिप्रासादसंस्थितः । जीवा० २७९ ।

वालग्गपोतिया-वालाग्रपोतिका(देशीशब्दः) । सूत्र० ७० । वालाग्रपोतिका-तडागादिजलस्योपरि प्रासादः । जीवा० २७९ ।

वालग्गपोतियासंठिय-वालाग्रपोतिकाशब्दः आकाशतडागमध्ये व्यवस्थितं क्रीडास्थानं, लघुप्रासादः तस्या इव संस्थितं-संस्थानम् । सूत्र० ७० ।

वालच्चिय-वालचितः लोमशः । पिण्ड० १२० ।

वालञ्जुकवणिजकः- । सम० ५ ।

वालञ्जुकाविभातवणिजः- । ओघ० ७५ ।

वालधि-पुच्छम् । उत्त० ५५१ ।

वालपुच्छभ-चामरम् । जं० प्र० ५३० ।

वालबंध- । ज्ञाता० २३० ।

वालय-वल्कजं शणप्रभृतिः । अनु० ३५ ।

वालरज्जुय-वालरज्जूकः-गवादिवालमयीरज्जुः । प्रश्न० ५६ ।

वालवरिस-केशवरिसं । नि० चू० तृ० ७० अ ।

वालवायज-वैडूर्यम् । जं० प्र० १९३ ।

वालवी-व्यालपी-व्यालान्-भुजङ्गान् पान्तीति व्यालपास्ते विद्यन्ते यस्य सः । प्रश्न० ३७ ।

वालवीअणी-वालव्यजनी-चामरम् । ठाणा० ३०४ ।

वाला-कश्यपगोत्रे भेदः । ठाणा० ३९० ।

वालि-किष्किन्धपुराधिपतिः । प्रश्न० ८९ ।

वालिय-पलोट्टितं । नि० चू० प्र० १२५ आ ।

वालिहा-वालधानी-शकपुच्छम् । ज्ञाता० ६२ ।

वालिहाण-वालिधानं-पुच्छम् । जं० प्र० ५२९ । वालिधान-पुच्छम् । उपा० ४४ । वालधानं-पुच्छम् । भग० ४५९ ।

वालुं-चिर्भटम् । अनुत्त० ६,९ ।

वालुंक-वालुङ्कं-खाद्यविशेषः । पिण्ड० १७२ ।

वालुंकि-वनस्पतिविशेषः । भग० ८०४ ।

वालुंकी-गुच्छाविशेषः । प्रज्ञा० ३३ ।

वालुंडयचम्मकोस-अन्त्यजचर्मकोत्थलः । तं० ।

वालु-वालुः-द्वादशमपरमाधार्मिकः । सूत्र० १२४ ।

वालुअजल-वालुकाजलं-यद्वालुकाया उपरि वहति । ओघ० ३२ ।

वालुअप्पभा-वालुकाया वालिकाया वा-परुषांशुत्करूपाया प्रभा स्वरूपावस्थितिर्यस्यां सा वालुकाप्रभा वालिकाप्रभा । अनु० ८९ ।

वालुए-यः कदम्बपुष्पाकारासु वज्राकारासु वैक्रियवालुकासु तप्तासु चणकानिव तान् पचति स वालुका । सम० २९ ।

वालुक-मूलविशेषः । जीवा० १३६ । वालुकं-चिर्भटम् । प्रज्ञा० ३७ । वालुकं-पालकं गजलक्षणप्रतिपादकं शास्त्रम् । उत्त० ४१७ ।

वालुकाजलं-यद्वालुकायाः उपरि वहति । ओघ० ३२ ।

वालुगा-वालुका-पृथिवीभेदः । आचा० २९ । वालुकाग्रामः । आव० २१८ ।

वालुगावरहओ-वालुकाददरकः-औत्पत्तिकीदृष्टान्ते मुख्यवस्तुः । आव० ४१९ ।

वालुङ्की-वल्लीविशेषः । आचा० ३० । वल्लीविशेषः । भग० ३ ६ ।

वालुञ्जकप्राय-वाणिज्यकः । ओघ० ८९ ।

वालुयप्पभा-वालुकाप्रभा, तृतीयनारकः । प्रज्ञा० ४३ ।

वालुया-वालुका-सिकता । जीवा० २३ । वालुका-सिकता । जीवा० १४० । वालुका-सिकता । प्रज्ञा० २७,-९९ । वालुका-सिकता । जीवा० १७५ ।

वालुयाकवल-वालुकाकवलः । उत्त० ३२७ ।

वालुयाजल- । नि० चू० द्वि० ७९ अ ।

वालू-वालुकः-नरके द्वादशमपरमाधार्मिकः । आव०६५० । द्वादशमपरमाधार्मिकः । उत्त० ६१४ ।

वाल्हीका-देशविशेषः । आचा० (?) ५ ।

वाव इत्यर्थं निपातः । विशे० ८३२ ।

वावट्ट- । नि० चू० द्वि० ६१ अ ।

वावण्ण-व्यापन्नं-शकुन्यादिभक्षणाद्विरसतां गतम् । ज्ञाता० १७३ । व्यापन्नं-विशाराहभूतम् । जीवा० १०७ ।

वावत्त-व्यावृत्तं-अवगतम् । जीवा० २५६ ।

वावत्ति-व्यापत्तिः-गुणानां भ्रंशः । अब्रह्मणः सप्तविंशतितमं नाम । प्रश्न० ६६ ।

वावत्ती-व्यावर्त्तनं व्यावृत्तिः-कुतोऽपि हिंसाद्यवद्येर्निवृत्तिरित्यर्थः । ठाणा० १७४ । ज्ञाता० १५६ ।

वावदूको-महाविद्वान्-क्रीकारः उपहासपूर्वकः । बृ० प्र० ५९ अ ।

वावन्न-व्यापन्नं-विनष्टम् । भग० ८८ ।

वावन्नकुदंसणवज्जणा-दर्शनशब्दः प्रत्येकमभिसंबध्यते व्यापन्नं-विनष्टं दर्शनं येषां ते व्यापन्नदर्शनाः-निह्नवादयः, तथा कुत्सितं दर्शनं येषां ते कुदर्शनाः-शाक्यादयस्तेषां वर्जनं व्यापन्नकुदर्शनवर्जनम् । प्रज्ञा० ५६ ।

वावन्नदंसणा-व्यापन्नदर्शनः-विनष्टसम्यग्दर्शनः । आव० ५३० । व्यापन्नं-विनष्टं-दर्शनं येषां ते व्यापन्नदर्शनाः-निह्नवादयः । प्रज्ञा० ६० । व्यापन्नदर्शनः-व्यापन्नं-विनष्टं-दर्शनं येषां ते व्यापन्नदर्शनाः-यैरवाप्यापि सम्यक्त्वं तथाविधकर्मोदयाद्वान्तरम् । उत्त० ५६६ ।

वावन्नसोया-व्यापन्नं-विनष्टं रोगतः श्रोतो-धर्माद्युपदिष्टप्रलक्षणं यस्याः सा व्यापन्नश्रोता । ठाणा० ३१३ ।

वावाड-व्यावृतः-आक्षणिकः । नि० चू० प्र० ३३३ आ ।

वावार-व्यापारः-इन्द्रियव्यापारः । आव० ६५२ । व्यापारं-किंचिदिति कर्मयोग्यम् । ओघ० १९९ ।

वावारित-व्यापारितो-नियुक्तः । उत्त० २८६ ।

वावि-वापिः-चतुरस्रोजलाशयविशेषः । भग० २३८ । वापी-निष्पुष्करा वृत्ता वा । प्रश्न० ८ । वापी-चतुरस्राकारा । जीवा० १८८ । चतुरस्राकारा । ज० प्र० ३० । वापी-चतुरस्रो जलाशयः । अनु० १५९ ।

वाविद्धसोया-व्यादिग्धं व्याविद्धं वा वातादिव्याप्तं विद्यमानमप्युपहतशक्तिकं श्रोतः उक्तरूपं यस्याः सा व्याविद्धश्रोता व्यादिग्धश्रोता । ठाणा० ३१३ ।

वाविया-सकृद्धान्यवपनवती । ठाणा० २७६ ।

वावी-वापी-चतुष्कोणा । प्रश्न० १६० । वापी-चतुरस्रा । औप० ८ । वापी-चतुरस्रजलाशयः । औप० ९३ । वापी-चतुरस्राकारा । प्रज्ञा० २६७ । वापी । प्रज्ञा० ७२ । वापी-चतुरस्राकारा । ज० प्र ४१ । वापी-चतुरस्रा । ज्ञाता० ६३ ।

वावीर- । ठाणा० ८६ ।

वासंति-वर्षति । उत्त० ४९३ ।

वासंतिआगुम्मा-वासन्तिकगुल्मा । ज० प्र० ९८ ।

वासंतियमउल-वासन्तिकामुकुलं-वासन्तिकाकलिका । जीवा० २७६ ।

वासंतिया-वासन्तिका-वनस्पतिविशेषः । प्रश्न० ८४ ।

वासंतियापुड-पुटविशेषः । ज्ञाता० २३२ ।

वासंतिलया-लताविशेषः । प्रज्ञा० ३२ ।

वासंती-गुल्मविशेषः । प्रज्ञा० ३२ ।

वासंविदावो- । नि० चू० प्र० ६७ आ ।

वास-वर्षाकालः । नि० चू० प्र० ३३४ आ । वासः-अवस्थानम् । उत्त० ४१ । वर्ष-भरतादिः । अनु० १२१ । वासः-रात्रौ शयनम् । भग० २७ । वर्ष-अल्पतरं वर्षणम् । भग० २०० । वर्षा-प्रावृट्कालः । ज० प्र० १५० । वर्षः-क्षेत्रम् । ज्ञाता० ११ । वर्षो-जलसमूहः । ज्ञाता० २५ । वासः-शरीरादिवासनम् । प्रश्न० १३७ । वर्षं-भरतादिः । प्रज्ञा० ७१ । वासं-वर्षाकालम् । औप० ६५ । वर्षं-पानीयम् । सूर्य० १७२ । वर्षं-वर्षाल्प-

अप्कायः । ओघ० ३१ । वर्षः-क्षेत्रः । निरय० ४ ।
**वासए**-आवासगद्वारं । नि० चू० प्र० ४८ आ ।
**वासकपूरम्**- । जीवा० १९१ ।
**वासग**-आवासः-नीडः । व्य० प्र० १४७ अ ।
**वासगणिया**-स्त्रीविशेषः । भग० ४६० ।
**वासगा**-वासन्तीति-वासकाः भाषालब्धिसम्पन्ना द्वीन्द्रियादयः । आचा० २३७ ।
**वासग्ग**-वर्षाग्रः-वर्षलक्षणं कालपरिमाणम् । उत्त० ७८ ।
**वासघर**-वासगृहम् । आव० ११६, ३५० । वासगृहम् । दश० ६८ ।
**वासण**-रयणप्पदीवादिणा उज्जोवितं । नि० चू० प्र० २३२ आ । वासनं प्रति कवेलुकाद्याधारवत् सुखेन पाटलाकुसुमादिभिर्वासयितुमशक्यत्वात् । दश० १०० ।
**वासत्ताण**-वर्षात्राणं-वर्षाकल्पम् । ओघ० ३१ । वर्षात्राणं-वर्षाकल्पम् । ओघ० १ ।
**वासत्ताणपणग**-वर्षात्राणानां पञ्चकं-वाल-सूत्र-सूचीमय-कुटशीर्षक-छत्रकरूपम् । बृ० द्वि० २५३ अ । नि० चू० प्र० १८० आ ।
**वासधर**-वर्षधरः हिमवदादिः । अनु० १७१ ।
**वासना**-भावना । आव० ५९५ । अविच्युत्याऽऽहितः संस्कारः । नंदी० १६८ । धारणाभेदः । दश० १२५ ।
**वासन्तिकलिता**-लताविशेषः । जीवा० १८२ ।
**वासन्तीलता**-नाट्यविशेषः । ज० प्र० ४१४ ।
**वासपडागा**-मुकुली-अहिभेदविशेषः । प्रज्ञा० ४६ ।
**वासभवन**-मैथुनसेवा तत्प्रधानं गृहकम् । ज० प्र० ४१ ।
**वासव**-वासवः-देवराजः । आव० ५०४ ।
**वासवदत्त**-वासवदत्तः-विजयपुरनगरनृपतिः । विपा० ९५ ।
**वासवदत्ता**-शिक्षायोगदृष्टान्ते प्रद्योतराज्ञः पुत्री । आव० ६७३ । चण्डप्रद्योतदुहिता । उत्त० १४२ ।
**वासवद्दल**-वर्षुद्दर्दलकम् । आव० ७१६ ।
**वासवद्दलग**-वर्षप्रधानं वार्दलकं वर्षवार्दलकम् । राज० २९ ।
**वाससए**-वर्षाशतम् । भग० २१० । भग० ८८८ ।
**वाससयसहस्स**-वर्षाशतसहस्रम् । भग० २१० ।
**वाससहस्स**-वर्षासहस्रम् । भग० २१० ।
**वाससी**-आरसति । उत्त० १३८ ।
**वासहर**-वर्षधरः-वर्षे उभयपार्श्वस्थिते द्वे क्षेत्रे धरतीति वर्षधरः, क्षेत्रद्वयसीमाकारी गिरिः । ज० प्र० २८२ । वर्षधरः-हिमवदादिपर्वतः । प्रश्न० ९५ । वर्ष-क्षेत्रविशेषं धारयतो-व्यवस्थापयत इति वर्षधरः । ठाणा० ७१ । वर्षधरः । ज्ञाता० १२१ ।
**वासहरपव्वए**-वर्षधरः हिमवदादिपर्वतः । प्रज्ञा० ७१ ।
**वासहरपव्वया**-वर्षधरपर्वता प्रमाणाङ्गुलप्रमेयाः । अनु० १७१ ।
**वासहरा**-वर्षधराः-प्रमाणाङ्गुलप्रमेयाः । अनु० १७१ ।
**वासा**-वर्षा ऋतुविशेषः । ओघ० २१२ । वर्षा-वर्षाकालः । सूर्य० १३३ । वर्षपर्वताः । पिण्ड० १२ । नि० चू० प्र० ३३९ अ । वर्षाकालः । नि० चू० प्र० ५८ अ । वर्षाकालः । ओघ० ११८ । वर्ष-क्षेत्रम् । ठाणा० ६८ ।
**वासाकप्प**-वर्षाकल्पः-कम्बलः । आव० ७३४ ।
**वासारती**-विसारयति-विस्तारयति । उत्त० ४९३ ।
**वासारत्त**-अस्सोओकत्तियओ, भद्दवओअस्सोओ वा । बृ० द्वि० ७७ आ । वर्षारात्रः आव० ५१३ । वर्षारात्रः । आव० १८९ । वर्षारात्रः-भाद्रपदाश्वयुजौ । ज्ञाता० १६० ।
**वासावास**-वर्षावासम् । आव० ११५ । वर्षाकल्पम् । आव० ६३० । वर्षावासम् । आव० ७२१ । पढमसमोसरणं । नि० चू० प्र० ३३६ आ । वर्षासु वासः-चातुर्मासिकमवस्थानं, वर्षावासम् । भग० ६६३ । वर्षायां वासो वर्षावासः तस्मिन् वा यो वासकल्पः । ओघ० ६२ । वर्षमाने-वर्षाकालनिवसनम् । नि० चू० प्र० ३३४ आ । वर्षावर्षः-वर्षासु-वर्षाकाले वर्षो-वृष्टिः वर्षासु वा आवासः-अवस्थानं वर्षावासस्तं, स च जघन्यतः आकार्त्तिक्याः दिनसप्ततिप्रमाणो मध्यवृत्त्या चतुर्मासप्रमाणः उत्कृष्टतः षण्मासमानः । ठाणा० ३१० ।
**वासि**-वासिः । आचा० ६१ ।
**वासिकी**-वार्षिकी-वर्षाकालभावी । सूर्य० २१९ ।
**वासिग**-वार्षिकं-वर्षाकालः पानीयरक्षणार्थं यत् कृतम् । ज० प्र० २६ ।
**वासिगभत्तं**-पर्युषितभक्तम् । आव० १९५ ।

वासिट्ठ-वाशिष्ठं-पुनर्वसुगोत्रम् । ज० प्र० ५०० । मूल-गोत्रभेदः । ठाणा० ३९० ।

वासिट्ठसगुत्ताए- । आचा० ४२१ ।

वासिट्ठसगोत्त-वाशिष्ठसगोत्रं पुनर्वसुनक्षत्रगोत्रम् । सूर्य० १५० ।

वासित-भृतम् । विशे० ११० ।

वासित्ता-वर्षिता-प्रवर्षणकारी, वर्षकोऽभ्युपगतसम्पादकः । ठाणा० २७० ।

वासिय-वासितम् । दश० १०९ ।

वासियभत्त-वासिकभक्तं दोषान्नम् । ओघ० २३ ।

वासी-अपकारिका । प्रश्न० १५७ । वासी-सूत्रधारशस्त्रविशेषः । ज० प्र० १५० । वासी-शस्त्रविशेषः । आव० ८३१ ।

वासीचंदणकप्प-छेदविलेपनसमविचारः । (मर०) । वासीचन्दनकल्पः-उपकार्यपकारिणोर्मध्यस्थः । आव० ७९९ । वास्यां चन्दनकल्पो यः स तथा । ज्ञाता० १०४ । वासीचन्दनकल्पः-अनेन समत्वमेव विशेषत आह-वासीचन्दनशब्दाभ्यां च तद्व्यापारकपुरुषावुपलक्षितौ, ततश्च यदि कश्चित् वास्या तक्षणोति अन्यश्च गोशीर्षादिना चन्दनेनालिम्पति तथापि रागद्वेषाभावतो द्वयोरपि तुल्यः । उत्त० ४६५ ।

वासीमुखा-वासीकारमुखा । उत्त० ६९५ ।

वासुदेवो-वासुदेवः-द्वारिकायाः राजा । आव० २७२ । वासुदेवः-पूर्वभवे राजललितजीवः । आव० ३५८ । वासुदेवः-वैनयिकीबुद्धिमान् । आव० ४२४ । वासुदेवः-कृतिकर्मदृष्टान्ते कृष्णः भावकृतिकर्म । आव० ५१३ । वासुदेवः-यो अश्वापहृतः । उत्त० ११८ । वैनयकीबुद्धौ दृष्टान्तः । नंदी० १६१ । दुष्टमधिकृत्य कामकथावर्णने रुक्मिणीपतिः । दश० ११० । भग० ३९ । आगामीचतुर्दशतीर्थकृन्नाम । सम० १५४ । वासुदेवः-सप्तरत्नाधिपः अर्धभरतप्रभुः । आव० ४८ । त्रिखण्डस्वामी । ज्ञाता० २० । द्वारवत्यां राजा । विशे० ६१९ । बलदेवानुजः-प्रव्रज्यां न निवारयामीत्यभिग्रहग्राहकः । पि० ९९ ।

वासुदेवघर-वासुदेवगृहम् । आव० २०५, २०९ ।

वासुदेवता-ऋद्धिविशेषः । ठाणा० ३३२ ।

वासुदेवा-ऋद्धिप्राप्तार्या । प्रज्ञा० ५५ ।

वासुपुज्ज-षट्शतपुरुषसहदीक्षाग्राहको तीर्थकृत् । सम० १०३ । वसूनां-देवानां पूज्यः वासुपूज्यः, द्वादशो जिनः, यस्मिन् गर्भगते वैश्रमणोऽभीक्ष्णं २ तद्राजकुलं रत्नैः पूरयतीति, देवराजाऽभीक्ष्णं २ जनन्याः पूजां करोति वा । आव० ५०४ ।

वासुपुज्जसामी-वासुपूज्यस्वामी, यस्य पादमूले मिथिलायास्तरुणधर्मपद्मरथो राजा चम्पायां प्रव्रजितुमागतः । आव० ३९१ ।

वासेणा- । नि० चू० प्र० ६ आ ।

वासोग्गह-उउवद्धोग्गहो । नि० चू० प्र० २३९ अ ।

वास्तव्यः- । आव० २७० ।

वास्तुल-हरितविशेषः । प्रज्ञा० ३१ ।

वास्तुलक-पत्रशाकविशेषः । ज० प्र० २४४ ।

वाह-वाहः-वाहयतीति शाकटिकः । सूत्र० ७२ । व्याधः-लुब्धकः । प्रश्न० १४ । व्याधः-लुब्धकः । व्य० प्र० २८९ अ । वाहः-अष्टाशताढकनिष्पन्नमाणः । अनु० १५१ ।

वाहए-वाहकः अश्वन्दमः । उत्त० ६२ ।

वाहडा-भ्राता । बृ० तृ० ७९ अ ।

वाहणं-णावण्णतरणप्पगारेण नयणं वाहणं भण्णति । नि० चू० तृ० ६३ आ । वाहनं-शकटादि । प्रश्न० ८ । वाहनं-शकटाद्याकर्षकर्षणम् । प्रश्न० ३८ । वाहनं-यानपात्रम् । प्रश्न० ९२ । वाहनं-वेगसरादिकम् । औप० २७ । वाहनं-गजादि । औप० ५४ । वाहनं-गवादि । औप० ६० । वाहनं-शिबिकादिः । जं० प्र० ३९७ । प्रवहणम् । आव० ३०४ । वाहनम् । आव० ३५४ । वाहनं-वेगसरादि । ठाणा० १७३ । यानपात्रम् । उपा० ४ । वाहनं-गिल्लिथिल्यादिरूपम्, गजाश्वादि । उत्त० ४३८ । वाहनं-अश्वादि । भग० १३५, ११३ ।

वाहणगमण-वाहनगमनं-शकटाद्यारोहणम् । ज्ञाता० १९१ ।

वाहन-यानम् । नंदी० १५४ ।

वाहमोक्ख-अश्रुविमोचनम् । ज्ञाता० २४० ।

वाहय-व्याहतं-यत्र पूर्वेण परं विहन्यते । अनु० २६१ । व्याहतं यत्र पूर्वेण परं विहन्यते तत्, सूत्रदोषविशेषः ।

आव० ३७४ ।

वाहयति-गुणपोलत्वाऽऽरोहति । उत्त० ४३६ ।

वाहरइ-व्याहरति । आव० २११ ।

वाहरह-व्याहर-कथय । ओघ० १०६ ।

वाहा-संस्तरणारोहणा । नि० चू० द्वि० ४३ आ ।

व्याधाः-लुब्धकाः । व्य० प्र० २३१ आ ।

वाहाउ-प्रभूतम् । बृ० तृ० ७५ अ ।

वाहाडा-वाहाटिता-न्यूनभाजनाः । बृ० तृ० ५८ अ ।

वाहाडिया-गर्भिणी । बृ० द्वि० २०८ अ ।

वाहित-व्याहूतः-शब्दितः । उत्त० ५५ ।

वाहि-व्याधिः-स्थिरकुष्ठादिः । भग० ३०६ । विशिष्टा आधिर्यस्मात् स व्याधिः-स्थिररोगः कुष्ठादिः । ज्ञाता० १८० ।

वाहिअ-व्याधिमान्-अत्यन्तमशक्तः । दश० २०५ ।

वाहिओ-अप्रसूता धेनवः । बृ० प्र० ३१७ अ । वाहितः-विप्रलब्धः । उत्त० ४३८ ।

वाहिग्घत्थ-व्याधिग्रस्तः । भक्त० ।

वाहिज्जंतु-व्याह्रियताम् । आव० ६६ ।

वाहिम-वाह्यः-सामान्येन रथयोग्यः । दश० २१७ ।

वाहिय-व्याधितः । ज्ञाता० १७८ । व्याधितो रोगी । ठाणा० १६४ । वाधितः-हतः । ज्ञाता० १६६ । वाहितः-आहूतः । जीवा० १९६ ।

वाहियकुल-वाहिककुलम् । आव० ६७७ ।

वाहियालि-वाह्याली । आव० २६१ ।

वाहिरित्त-व्याहृतः । आव० ३१० ।

वाही-व्याधिः-कुष्ठादिः । प्रश्न० १६ । व्याधिः-कुष्ठादिः । प्रश्न० १६ । विशिष्टा वा आधिः-मनःपीडा । प्रश्न० २५ । व्याधिः-चिरस्थाता कुष्ठादिः । प्रश्न० ११७ । व्याधिः-विशिष्टचित्तपीडा चिरस्थायी गदो वा । प्रश्न० १६२ । व्याधिः-चिरस्थायी कुष्ठादिरूपः । विपा० ७६ । व्याधिः । जीवा० २७६ । व्याधिः । दश० २३४ । व्याधिः-अतीव बाधाहेतुः कुष्ठादिः । उत्त० ४५४ ।

वाहीक-भारवहः । उत्त० ५८१ ।

वाहेसिअ-वाहितवान्, व्यंसितवान् । उत्त० ३८० ।

वाहुय-व्याहृतम् । ओघ० ७७ ।

विउयफटग-पृथिवीवस्थकः-पृथिवीवर्णः । जीवा० १०३ ।

विउवा-चतुरिन्द्रियविशेषः । प्रज्ञा० ४२ ।

विउभ- । नि० चू० तृ० ७१ अ ।

विअ-विन्दुः-दन्तप्रधानः भावकः । आव० ३०८ ।

विदपः-प्रथमे कर्मणस्तदृते कर्मणःपरवत् । आव० ३२१ ।

विदयः-पर्वतविशेषः । आव० १४८ । विन्ध्यः । नन्दी० १७४ ।

विञ्झगिरि-विन्ध्यगिरिः । भग० १७१ । सर्व विन्ध्यस-न्निवेशः । भग० ६८८, ६६४ ।

विट्टाई-वृन्दस्थायी । आव० १६२ ।

विटलिया-शामदानादीनि । पं०

विडिया-विण्टिका । ओघ० ११८ । विण्टिका । उत्त० ८७ ।

वित-वृन्तं-अधोभागवर्तिः । ज० प्र० ३६० ।

विद्ध-नाभी । नि० चू० द्वि० ६६ अ ।

विधति-विदधाति । आव० २१७ ।

विधेज्जा-विन्ध्येत्-आदयेत् । आचा० १५ ।

विशतिः- । आव० ११८ ।

विहणिज्ज-बृंहणीयम् । ओघ० ६५ ।

वि-कुत्सायाम् । ओघ० १८ । विट-विष्टा । प्रश्न० १०५ ।

विअंति-व्यन्तिः-अन्तक्रिया । आचा० २७९ ।

विअंतिकारए-विशेषेणान्तिर्व्यन्तिः-अन्तक्रिया तस्याः कारको व्यन्तिकारकः । आचा० २७६ । व्यन्तिकारकः-कर्मक्षयविधायी । आचा० २८२ ।

विअक्का-वितर्का । दश० ५० ।

विअड-विकटं-शुद्धोदकम् । दश० १८१ । विकृतं-प्रासुकोदकम् । दश० २०६ ।

विअडा-विकटा-विशाला । ज० प्र० १११ ।

विअडावई-विकटापाति । ज० प्र० ३०२, ३०५ ।

विअणुसय-अनुशयवर्जितः । ग० ।

विअत्त-व्यक्तः-द्रव्यभाववृद्धः । दश० १९५ ।

विअरग-विदरकं-गर्त्ता । ज० प्र० ३९१ ।

विअल-विजलं-सकर्दमम् । व्य० प्र० ४७ आ ।

विआ-व्यक्ता-अलज्ञा । दश० २३५ ।

विआलए-विकालकः । ज० प्र० ५३४ ।

विआवत्त- । सम० ३२ ।

विआह-व्याख्या, विवाहः, विवाधः विविधा-जीवाजीवादि-प्रचुरतरपदार्थविषयाः आ-अभिविधिना कथञ्चिन्निखिलज्ञेय व्याप्त्या मर्यादया वा-परस्परासङ्कीर्णलक्षणाभिधानरूपया ख्यानं-प्रश्नितपदार्थप्रतिपादनं, विविधतया विशेषेण वा आख्यायन्ते व्याख्या-अभिलाप्यपदार्थवृत्तिः, अर्थकथनं वा विवाहः-विविधः अर्थप्रवाहः नयप्रवाहः, विशिष्टवाहः-नयप्रवाहः, विवाहः विशिष्टः सन्तानो वा प्रमाणाबाधितः। व्याख्या-अभिलाप्यपदार्थवृत्तिः । व्याख्या-अर्थकथनम् । व्याख्या-अर्थप्रतिपादनम् । भग० २ । विवाहः-विशिष्ट-सन्तानः । भग० २ । विविधः । भग० २ ।

विआहपन्नत्ति-व्याख्याप्रज्ञप्तिः-विविधा जीवाजीवादिप्रचुरतरपदार्थविषयाः आ-अभिविधिना कथञ्चिन्निखिलज्ञेय-व्याप्त्या मर्यादया वा ख्यानानि-प्रश्नितपदार्थप्रतिपादनानि व्याख्यास्ताः प्रज्ञाप्यन्ते-प्ररूप्यन्ते भगवता सुधर्मस्वामिना जम्बूनामानमभियस्यां सा । भग० २ । व्याख्याप्रज्ञप्तिः-व्याख्याप्रज्ञाप्तिर्वा, व्याख्यानां-अर्थप्रतिपादनानां प्रकृष्टा प्रज्ञाप्तयः-ज्ञानानि यस्यां सा । भग० २ । व्याख्याप्रज्ञप्तिः- व्याख्याप्रज्ञाप्तिर्वा, व्याख्यायाः-अर्थकथनस्य प्रज्ञायाश्च तद्धेतुभूतबोधस्य व्याख्यासु वा प्रज्ञायाः आप्तिः-प्राप्तिः आत्तिर्वा-आदानं यस्याः सकाशादसौ व्याख्याप्रज्ञाप्तिः व्याख्याप्रज्ञात्तिर्वा । भग० २ । व्याख्याप्रज्ञाप्तिः व्याख्याप्रज्ञात्तिर्वा, व्याख्याप्रज्ञात्-भगवतः सकाशादाप्तिरात्तिर्वा-गणधरस्य यस्याः सा । भग० २ । विवाहप्रज्ञप्तिः-विविधा अर्थप्रवाहाः प्रज्ञाप्यन्ते-प्ररूप्यन्ते प्रतिबोध्यन्ते यस्यां सा । भग० २ । विवाहप्रज्ञाप्तिः-विवाहाः विशिष्टसन्तानाः प्रज्ञाः आप्यन्ते यस्याः सा । भग० २ । विवाहप्रज्ञाप्तिः । विबाधाः-प्रमाणाऽबाधिताः प्रज्ञाः आप्यन्ते यस्याः सा । भग० २ ।

विइंतेति-विकृन्तन्ति-छिनत्ती । ज्ञाता० १८७ ।

विइगिच्छा-विद्वज्जुगुप्सा-विद्वांसः-साधवो विदितसंसारस्वभावाः परित्यक्तसमस्तसङ्गास्तेषां जुगुप्सा-निन्दा । आचा० २२१ ।

विइण्ण-अनुज्ञातः । ब्य० प्र० २५७ ।

विइण्णवियार-वितीर्णो-राज्ञाऽनुज्ञातो विचारः-अवकाशः यस्य विश्वसनीयत्वात् असौ वितीर्णविचारः सर्वकार्येष्विति प्रकृतम् । ज्ञाता० १२ ।

विइन्न-विकीर्णं-व्याप्तम् । भग० ३७ ।

विइय-विदितः-प्रतीतः । उत्त० ५०८ ।

विउंजति-विविधं व्यापारयति । आव० ३८६ ।

विउ-विद्वान्-संयमकरणैकनिपुणः । सूत्र० ४६ । विद्वान्-सद्विवेकोपेतः । सूत्र २१८ । अनन्तकृद्दशानां तृतीयवर्गस्य चतुर्थमध्ययनम् । अन्त० ३ । विद्वान्-गीतार्थः । प्रश्न० ११८ ।

विउकम्म-व्युत्क्रम्य-विशेषेणोल्लङ्घ्य । उत्त० २४७ ।

विउवक्कंति व्युत्क्रान्ति-उत्पत्तिः । भग० ८६ । व्यवक्रान्तिः-मरणम् । भग० ८६ ।

विउवकमइ-व्युत्क्रामति-उत्पद्यते । जीवा० ३०६ ।

विउवक्कमति-च्यवते । ठाणा० १२२ । व्युत्क्रमति-विनश्यति । भग० १४२ । व्युत्क्रामति गर्भतयोत्पद्यते । प्रज्ञा० २२८ । व्युत्क्रामति-उत्पद्यते । जीवा० ११० । व्यवक्रामति-विनश्यति । ठाणा० १२२ ।

विउक्कस्स-व्युत्कर्षयेयुः-श्लाघां कुर्वते । आचा० २५२ ।

विउक्कस्स-विविधमुत्कर्षो-गर्वः व्युत्कर्षः भावः । सूत्र० ३४ ।

विउब्भाएमाण-व्युद्भ्राजमानः-शोभमानः । विजृम्भमाणो वा व्युद्भ्राजयन् वा । भग० १७५ ।

विउदृण-सल्लुद्धरणम् । ओघ० २२५ ।

विउट्टति-व्यावर्त्तयति-व्यपरोपयति विकुट्टति वा छिनत्ति वा । आचा० ४८ । वर्तते-समुत्पद्यते । सूत्र० ३५४ ।

विउट्टाहि-विश्रोटनं-अनुबन्धच्छेदनम् । ज्ञाता० १०६ ।

विउट्टित्तए-व्यतिवर्तयितुं-विश्राटयितु विकुट्टयितु वा अचिरानुबन्धं विच्छेदयितुम् । ठाणा० ५७ ।

विउट्टेज्जा-विश्रोटनं-उदध्यवसायविच्छेदनम् । ठाणा० १३७ ।

विउट्ठ-विवृतं-प्रसारितम् । ज० प्र० २९१ ।

विउट्ठित-व्युत्थितः परतीर्थिको गृहस्थो वा । मिथ्यादृष्टिः। संयमाद्भ्रष्टो वा । सूत्र० २४५ ।

विउत्थाणं-उद्दुमरं । नि० चू० प्र० १६४ आ ।
विउरुव्विऊण-विकृत्य । उत्त० ३१८ ।
विउल-पुष्कलम् । भग० १२७ । शरीरव्यापकम् । भग० २३१ । विपुलं-सिद्धिगमनतीर्थम् । अनुत्त० १ । विपुलम् । अनुत्त० ७ । विपुल-विपुलकालवेद्यम् । प्रश्न० १५६ । विपुलं-प्रचुरम् । भग० १३५ । विपुलं-विपुलाभिधानम् । भग० १२७ । विपुलं-विस्तीर्णम् । भग० १२५ । रोगविशेषः । भग० ४८४ । विस्तीर्णं । ज्ञाता० ७४ । निरय० २० । विपुलं-बहु । ठाणा० ४२१ ।
विउलट्ठाण-विपुलस्थानं-संयमस्थानम् । दश० १९५ ।
विउलमई-विपुलमति-मनोविशेषग्राहिमनःपर्यायज्ञानी । प्रश्न० १०५ । विशेषग्राहिणी मतिः विपुलमतिः । नंदी० १०८ । विपुला-बहुविधविशेषणोपेतमन्यमानवस्तुग्राहित्वेन विस्तीर्णामतिः-मनःपर्यायज्ञानम् । औप० २८ । विशेषग्राहिमतिमान् । नंदी० १०८ ।
विउलमति-विपुला-विशेषग्राहिणी मतिः विपुलमतिः । ठाणा० ५० ।
विउला-विपुला बहुदिनत्वात् । ठाणा० २४७ । विपुला शरीरव्यापकत्वात् । ज्ञाता० ६४ । विपुला-विशेषग्राहिणी मतिः । नंदी० १०८ । विपुला-सर्वशरीरावयवव्यापिनीः। प्रश्न० १७ । विपुला-विस्तारवती एकपदेनानेकपदानुसारिणी मतिः । आव० ४१४ । विपुला-विशेषग्राहिणी । ठाणा० ५० ।
विउल्लेति-व्याकुलयति । उत्त० १४८ ।
विउवाय-व्यतिपातः-प्राणव्यपरोपणम् । सूत्र० ३६४ ।
विउव्व-विकुर्व-इत्ययं धातुः सामायिकोऽस्ति विकुर्वणेत्यादिप्रयोगदर्शनात् । भग० १५५ ।
विउव्वण-विकुर्वणं-मंडनम् । बृ० तृ० ७३ आ ।
विउव्वणय-विक्रिया नानारूपा । भग० ६०४ ।
विउव्वा-गुच्छाविशेषः । प्रज्ञा० ३३ ।
विउव्वि-विक्रियामापन्नः । ओघ० १२१ ।
विउव्विय-विविधं-विशिष्टं वा कुर्वन्ति तदिति वैकुर्विकम् । ठाणा० २९५ ।
विउव्विया-वैक्रिया-उद्भूतरूपा । आव० ९२ । नि० चू० प्र० ८० आ ।

विउसग्ग-अभ्यन्तरप्रायश्चित्ते षष्ठो भेदः । भग० ६२२ । व्युत्सर्गो-निरभिष्वङ्गतया देहोपधित्यागः । भग० ६२६ ।
विउसग्गपडिमा-व्युत्सर्गप्रतिमा-कायोत्सर्गकरणम् । ठाणा० ६५ ।
विउसग्गारिह-व्युत्सर्गार्हः-कायोत्सर्गः । औप० ४२ ।
विउसमण-व्यवशमनं-पुंवेदविकारोपशमः । भग० ५७६ ।
विउसमणय-व्यवशमनता-परस्मिन् क्रोधाग्निवर्त्तिनि सति क्रोधोज्झनम् । भग० ७२७ ।
विउसवित्ता-प्रशमय्य । बृ० द्वि० ६७ अ ।
विउसविय-व्युत्सृष्टम् । नि० चू० प्र० २१६ अ ।
विउसवेउं- । बृ० द्वि० २०९ आ ।
विउसिज्जा- । आचा० ३८० ।
विउस्सग्गपडिमा-व्युत्सर्गप्रतिमा-कायोत्सर्गकरणम्। औप० ३२ ।
विउस्सग्ग-कायोत्सर्गः । ठाणा० १९५ । व्युत्सर्गः । ठाणा० २०० । व्युत्सर्गः-निःसङ्गतया देहोपधित्यागः। औप० ४५ । कायादीनां व्युत्सर्गः । अभिष्वङ्गता । भग० १०० । व्युत्सर्गः-निःसङ्गतया देहोपधित्यागः । ठाणा० १६२ । व्युत्सर्गः-द्रव्यभावभेदभिन्नो विविधोत्सर्गः, योगसंग्रहे पञ्चविंशतितमो योगः । आव० ६६४।
विउस्सग्गारिह-दशधा प्रायश्चित्ते पञ्चमम् । भग०६२०।
विउस्सति-विहस्यते-विद्वानिवाचरति । सूत्र० ३७ ।
विउस्सिय-विविधं-अनेकप्रकारं उत् प्राबल्येन श्रितः-सम्बद्धः। व्युषितो वा । संसारे वा उषितः संसारान्तर्वर्त्तीति । सूत्र० ३७ ।
विउहित्ताण-व्यूह्य-प्रेर्य । दश० १६७ ।
विओ-विदो विद्वांसः । बृ० प्र० ४२ अ ।
विओगपणिहाण-वियोगप्रणिधानं-वियोगे दृढाध्यवसायः। आव० ५८५ ।
विओसवित्तए-वितोषयितुं-उपशमयितुम् । व्य० द्वि० २२२ आ ।
विओसियं-विविधमवसितं पर्यवसितमुपशान्तम् । सूत्र० २३४ ।
विकंपइज्जा-विकत्थयेत्-अत्यन्तं चमढयेत् । सूत्र० २५० ।
विकंपई-विकम्प्य-विमुच्य । सूयं० ८ ।

विकंपण-विकम्पनं-स्वस्वमण्डलाद्बहिरवष्कणमभ्यन्तरप्रवेशनं वा । सूर्य० ३३ ।

विकट-विकृत-प्राशुकीकृतम् । बृ० द्वि० १७२ अ । व्य० प्र० १६६ अ ।

विकटति-विकर्षयति । आव० ७०३ ।

विकटापातो वक्तुं लविजयार्द्धपर्वतः । प्रश्न० ९६ ।

विकटु-विशेषेण कटुकं विकटुकं औषधम् । बृ० प्र० १६८ अ ।

विकडुभ-परिमन्थः-अनाचीर्णम् । बृ० प्र० १६४ अ । चालनकम् । बृ० प्र० १६५ आ । चीडको चालणं वा । नि० चू० द्वि० १४४ अ ।

विकड्ढणा-बाह्वो गृहीत्वाऽऽकर्षणम् । बृ० तृ० ११३ (?) ।

विकत्ता-विकर्त्तिता-विक्षेपकः । उत्त० ४७७ ।

विकत्थइ-विकत्थते-श्लाघीकरोति । दश० २५३ ।

विकत्थणा-विकत्थना-प्रशंसा । पिण्ड० ५० ।

विकत्थते-जनसमक्षमुत्कीर्तयति । उ०मा०गा० ७१ ।

विकत्थन-परपरिवादः । ठाणा० २६ ।

विकत्था-श्लाघा । दश० चू० १३६ ।

विकद-अपंगुसद्वारम् । व्य० द्वि० ४२० अ ।

विकप्प-विकल्पः-सत्यनिष्पत्तिः । वप्रकूपादिदेवकुलभवनादिविशेषः । ठाणा० २१० । विकल्पः-प्रासादभेदः । प्रश्न० ८ । थेरकप्पिया जति तिण्णि वत्थुरंति णिक्कारणतो वा तणभोगं करेंति तो । नि० चू० प्र० १६१ आ । यानि पुनस्त्रिप्रभृतीनि संसारके प्रस्तारयति एस विकल्पः, यद्य अकारणे-कारणमन्तरेण तृणाभांमोथं क्रियते एषोऽपि विकल्पः, यत्पुनः कार्ये त्रुपिराणि अशुषिराणि वा गृह्णाति एष भवति विकल्पः । व्य० द्वि० २८७ अ ।

विकप्पणा-कल्पना-विकल्पाः वस्तुविशेषाः । ज्ञाता० २१८ । विशेषेण छेदनं विकल्पना । उत्त० ६३८ ।

विकप्पखित्तकट्ठा-विकम्पक्षेत्रकाष्ठा । सूर्य० १४० ।

विकया-विकृता-कृतवणा । ज० प्र० १७० ।

विकरण-कलशस्य पार्श्वतः स्थापनं । उद्वर्तनं वा तृणेषु गहणं एकत्रमीलन गन्धियासु बन्धनछोटनम् । बृ० तृ० ३१ आ ।

विकरणकरण-विक्षेपणकरणम् । ज्ञाता० १५२ । विकरण करित-अणेगखंडकरेत्ता । नि० चू० द्वि० १४९ अ ।

विकराल-भयानकः । उत्त० ३५८ ।

विकल-विकलं-असम्पूर्णम् । भग० ३०८ ।

विकहा-विरुद्धा-संयमबाधकत्वे कथा-वचनपद्धतिः विकथा । ठाणा० २१० । विकथा-विरूपा कथा, अथवा स्त्रीभक्तचौरजनपदकथा । ओघ० ५५ । कहाविवक्खभूता विकहा । नि० चू० तृ० १ आ । विकथा परिवादरूपा । प्रश्न० १२० । विरुद्धा विनष्टा वा कथा विकथा । आव० ५८० । विकथा-स्त्रीकथाभक्तकथेत्यादिका । दश० ११४ । विकथा-अनाराधना वाग्वृत्तिः । बृ० द्वि० ४० अ ।

विकहाणुओग-विकथानुयोगो- अर्थकामोपायप्रतिपादनपरं कामन्दकवात्स्यायनादि । सम० ४९ ।

विकासियधार-विकोशितस्य । (?)

विकिंचणयाए-विवेचना निर्जरा । ठाणा० ४४१ ।

विकिंचणिया-पारिष्ठापनिकी । आव० ८५३ ।

विकिञ्चिका- । नि० चू० प्र० १८८ आ ।

विकिण्ण-विकीर्णः-व्याप्तः । जीवा० २२३ ।

विकिरिज्जमाण-इतस्ततो विप्रकीर्यमाणः । ज० प्र० ३६ ।

विकुञ्जिय-विकुञ्जानि कृत्वा । आचा० ३८१ ।

विकुरुड-कुणालायां स्थितः द्वितीयो मुनिः । उत्त० २०४ ।

विकुर्व-सिद्धान्तप्रसिद्धो धातुः । सूर्य० २६७ । विकुर्व-विक्रिया । जीवा० ११९ ।

विकुर्वितं-वेष्टकाद्याभरणेवाऽलङ्कृतम् । बृ० प्र० १०५ अ ।

विकुव्वणा-विकुर्वणा-रूपाकरणम् । ठाणा० १०४ ।

विकुस-विकुशः-बल्वजादयस्तृणविशेषः । ज० प्र० ९८ । विकुशः-बल्व(ल)जादिकः । औप० ९ । विकुशः बल्वजादिःतृणविशेषः । भग० २३८ । जीवा० १४१ ।

विकूइए-विस्वरः । आव० २०५ ।

विकूड-विकूटयेद्-प्रतिहन्यात् । पिण्ड० १३६ ।

विकृतत्वक्-स्फुटितशरीरः । प्रश्न० ४१ ।

विकृतविभत्स-वेतालः । प्रश्न० ५२ ।

विकृत्य- । पिण्ड० १६७ ।

विकोए-विकोशः । दश० २३६ ।

विकोवण-विकोपनं-प्रकोपनं झटिति तत्तदर्थव्यापकतया प्रसरीभवनम् । पिण्ड० २७ । विकोपनं-विपाकः । ठाणा० ४४७ ।

विकोविद-जो वा भणिओ अज्जो जइ भुज्जो २ सेविहिसि तो ते छेदं मूलं वा दाहामो, एसो विकोविदो भण्णति । नि० चू० तृ० १२१ अ ।

विकोसंत-विक्रोशन्-परानाक्रोशन् विगतकोशान्तो वा । प्रश्न० ८० ।

विकोसायंतं-विगतकोशम् । प्रश्न० ८० ।

विकोसियधारासि-विकोशितस्य-अपनीतकोशकस्य निरावरणस्य धारः-धाराप्रधानखड्गः । ज्ञाता० १३३ ।

विक्कंतजोणि-व्युत्क्रान्ता-अपगता योनिः स्वयमेव यः पृथिवीकायो वा । ओघ० १३० ।

विक्कंति-विक्रान्ति-विक्रमं कान्ति-प्रभाम् । ज्ञाता० २११।

विक्क-वृकः । जीवा० २८२ ।

विक्कम-विक्रमः-चङ्क्रमणम् । जं० प्र० ११० । विक्रमः । जीवा० १२७ । विक्रमः-पराक्रमः । जीवा० २७० । विक्रमः-पादविक्षेपः । जं० प्र० ५२९ । विक्रमः-चङ्क्रमणम् । प्रश्न० ७७ । विक्रमं पुरुषकारविशेषः । प्रश्न० ४९ । विक्रमः-सञ्चरणम् । सम० १५८ । विक्रमः-विशिष्टं क्रमणं-क्षेत्रलङ्घनम् । भग० ४८० ।

विक्कय-विक्रियः । आचा० ३२ ।

विक्कवया-विक्लवता-तच्छोकातिरेकेणाहारादिष्वपि निरपेक्षता, असम्प्राप्तकामभेदः । दश० १९४ ।

विक्काम-विक्रामः-पराक्रमः । ओघ० २० ।

विक्खंभ-विष्कम्भः-विस्तरः । भग० ११९ । विष्कम्भः । अनु० १८० । विष्कम्भः-विस्तरः । प्रज्ञा० ५९१ । विष्कम्भः-विस्तारः । ठाणा० ६९ । विष्कम्भः-द्वारशाखयोरन्तरं । ठाणा० २२७ । विष्कम्भम् । नंदी० ९१ । विष्कम्भः-विस्तरः । ठाणा० ४५० । विष्कम्भः-पृथुत्वम् । ठाणा० ४७९ । विष्कम्भः-पृथुत्वम् । ठाणा० ६८ । विष्कम्भो-विस्तारः । सम० ११४ । विष्कम्भो-विस्तारः । जं० प्र० २७ । विष्कम्भः-विस्तारः शरापरपर्यायः । जं० प्र० ६७ । व्यासः । जं० प्र० १९ । विष्कम्भः-विस्तारः । प्रज्ञा० ४८ । विष्कम्भः-बाहल्यम् । सूर्य० ८ । विष्कम्भः-विस्तारः । जीवा० ४० । विष्कम्भः-उदरादिविस्तारः । प्रज्ञा० ४२७ । विष्कम्भं-प्रमाणाङ्गुलप्रमेयः । अनु० १७१ । विष्कम्भः-आक्रमणम् । वृ० प्र० २५७ आ ।

विक्खंभइत्ता-विष्कम्भ्य । आव० २२२ ।

विक्खंभओ-विष्कम्भतः-विस्तारमधिकृत्य । प्रज्ञा० २७५ ।

विक्खंभवुड्ढी-विष्कम्भवृद्धिः । सूर्य० ३८ ।

विक्खणं-विमृरणं । नि० चू० द्वि० १२२ आ ।

विक्खत्तं- । नि० चू० प्र० १८२ अ ।

विक्खय-विकृतं-कृतव्रणम् । भग० ३०८ ।

विक्खरिज्जमाणं-विकीर्यमाणं-इतस्ततो विप्रकीर्यमाणम् । जीवा० १९२ ।

विक्खिणं- । ओघ० १६६ ।

विक्खित्त-धर्मकथनादिना वा व्याक्षिप्तः । ओघ० १७६ । विकीर्णं गोखुरक्षुण्णतया विक्षिप्तं धान्यम् । ठाणा० २७७ । विक्षिप्तम् । आव० २६२ ।

विक्खित्ता-विक्षिप्ता-विकीरणम् । उत्त० ५४१ । विक्षिप्ता । ओघ० १०६ ।

विक्खिन्न-विकीर्णं-प्रसारितम् । भग० ६३१ ।

विक्खिरिज्जइ-विकीर्यते । आव० ६२५ ।

विक्खिरेज्ज-विकीरेत्-प्रसारयेत् । भग० ६३१ ।

विक्खिरेज्जा-विकिरेद्-इतस्ततो विक्षिपेत् । उत्त० ४२ ।

विक्खुण-अक्षाणकः । नि० चू० द्वि० १२२ आ ।

विक्खेव-विक्षेपः-अप्रयत्नेन रचिओ इत्यादि सपादश्लोकचतुष्टयोक्तलक्षणः । प्रश्न० १४० । विक्षेपः-अधर्मद्वारस्यैकविंशतितमं नाम । प्रश्न० ४३ । विक्षेपः-यत्र वस्त्रस्यान्यत्र क्षेपणं वस्त्राञ्चलानां वा यत्रोर्द्धं क्षेपणम् । ओघ० ११० ।

विक्खेवणि-विक्षेपणी-विक्षिप्यतेऽनया सन्मार्गात् कुमार्गे कुमार्गाद्वा सन्मार्गे श्रोतेति विक्षेपणी, धर्मकथाया द्वितीयो भेदः । दश० ११० ।

विक्खेवणी-विक्षिप्यते-कुमार्गविमुखो विधीयते श्रोता या कथया सा विक्षेपणी । औप० ४६ । विक्षिप्यते-सन्मार्गात् कुमार्गे कुमार्गाद्वा सन्मार्गे श्रोताऽनयेति विक्षेपणी । ठाणा० २१० ।

विक्रान्तभाट-शूरः । दशा० २३८ ।

विक्रिया-विकारो-विकृतिः विकरणम् । (?) ।

विक्रमः-विहारेण प्रभूतक्षेत्रव्याप्तिः । (?) ।

विक्षेप-तस्यैवाभिधेयार्थं प्रत्यनासक्तता । सम० ६४ ।

विखुट्टती-क्षरति । आव० ७१० ।

विगंचण-विकिंचणं-त्यागः । ओघ० १४२ ।

विग-वृकम् । आचा० ३३८ । वृकः-ईहामृगः नाखरविशेषः । प्रश्न० ७ । वृकः-नाखरविशेषः । प्रश्न० ५३ । वृकः-ईहामृगः । जं० प्र० १२४ । वृकः-ईहामृगः । प्रश्न० १६२ ।

विगइ-विकृतिमं । दशा० २८ । विकृतिः-विकारः । भग० ८७ ।

विगइगय-विकृतिगतम् । दशा० २८ ।

विगइपडिबद्ध-विकृतिप्रतिबद्धो अनुपधानकारी । बृ० तृ० १०४ आ ।

विगइसहावा-विकृतस्वभावा । दशा० २८ ।

विगई-विकृतिः । आव० ८५२ ।

विगईगओ-विगतिगतः-विगतिजातः । आव० ५३८ ।

विगईविवज्जियाहार-विगतिभिर्वर्जित आहारो यस्य सः । आव० ५६८ ।

विगड-मृतः, देहः । जीवा० १०६ । विकटं स्पष्टम् । ध्य० प्र० १६७ आ ।

विगडणा-आलोयणाणुपुव्वी । नि० चू० तृ० १३५ आ ।

विगत-विकृतः-तस्तकृतः-पृथक्कृतः । प्रश्न० २१ ।

विगतमीसता-सत्यामृषायां द्वितीयो भेदः । ठाणा० ४६० ।

विगतरस-विरसं-पुराणधान्योदनादि । ठाणा० २९८ ।

विगति-विकृतिः-विकारः । बृ० द्वि० ११६ आ ।

विगतिकप-चालि विगतीए कत । नि० चू० प्र० १६६ अ ।

विगतिगत-विगती वा जमि दव्वे गता त । नि० चू० प्र० ३४२ ब ।

विगतो-विगारो । नि० चू० प्र० ३१२ अ । [illegible] विरूवा वा [illegible], विविहा वा संथारे, [illegible] । नि० चू० [illegible] ३४२ ब ।

विगसन-[illegible] । सूत्र० ३२१ ।

विगता-[illegible] । भग० ३३३ ।

विगदूमिय-वृकैः-शृगालैर्वा ईषद् भक्षितम् । आचा० ३४९ ।

विगद्धया-ध्वजा । जीवा० २१५ ।

विगप्प-विकल्पो-व्याहृतिः । विशे० ८८६ । विकल्पः-देशविकल्पः, देशसम्बन्धी शस्यनिष्पत्त्यादिविचारः, देशकथायाः तृतीयो भेदः । आव० ५८१ (?) ।

विगप्पनियम विकल्पो-व्याहृतिः, नियमो-निश्चयः, ततश्च पूर्वपदविकल्पोपलक्षित उत्तरपदनियमो यत्रासौ विकल्पनियमः । विशे० ८८६ ।

विगप्पविगप्प-विकल्पविकल्पः-विकल्पयुक्तो विकल्पो यत्रासौ । विशे० ८८७ ।

विगम-विगमः-विनाशः । आव० २८२ ।

विगय-विगमः-वस्तुनोऽवस्थान्तरापेक्षया विनाशः । भग० १८ । विकृतं-बीभत्सम् । भग० ३०८ । विगत-ओघतदचेतनापर्यायादचेतनत्व प्राप्तः । प्रश्न० १०८ । विकृतं-बीभत्सम् । अनुत्त० ६ । विगतं-प्रनष्टम् । जीवा० १०७ । विकृतः । उपा० २० । वृकः-वरूकः । ज्ञाता० ६५ ।

विगयकप्पयनिभ-विकृतो योऽलङ्कारादीनां कल्प एव कल्पकः-छेदः खण्डं कर्परमिति तात्पर्यं तन्निभं-तत्सदृशमिति । उपा० २० ।

विगयगिद्ध-विगता गृद्धिर्विषयेषु यस्य सः विगतगृद्धिः-आत्मगतदोषरहितः । सूत्र० ११५ ।

विगयजीवकलेवर-मनुष्यमनुष्योरस्तित्वमानम् । प्रश्न० ५० ।

विगयछउम-विगतछद्म-छद्मरहितम् । प्रश्न० ११२ ।

विगयभया-विगतभया अज्ञातोदाहरणे विनयवतिप्रवृत्तिकाशिष्या । आव० ६६६ ।

विगयमुग्गमुमय-विकृते-विकारवती [illegible]-मानं [illegible] । ज्ञाता० १३३ ।

विगयमिस्सिया-[illegible] प्रामादिकं [illegible] वा [illegible] [illegible] दशसु [illegible] विगतमिश्रिता । प्रज्ञा० २५६ ।

विगयमाह विगतमोहः-विगतदेषविग्रहः । सूत्र० ४०१ ।

विगयविसया-[illegible] । दश० .

२०६ ।

विगयसत्थ-विगतस्वास्थ्यम् । ज्ञाता० १६६ ।

विगयसोगाओ- । ठाणा० ८० ।

विगरण-विकरणं-खण्डशः कृत्वा परिष्ठापनम् । बृ० तृ० १५० आ ।

विगरणरूव-विकरणरूपः-लिङ्गविवेकः । बृ० तृ० ९० अ ।

विगल-विकलः-निरुद्धेन्द्रियवृत्तिः । प्रश्न० ४६ ।

विगलणा-आलोयणा । नि० चू० तृ० २२ अ ।

विगलिंदिए-एकद्वित्रिचतुरिन्द्रियः । ठाणा० ३१६ । विकलान्यसम्पूर्णानि इन्द्रियाणि येषां ते विकलेन्द्रियाः-एकद्वित्रिचतुरेन्द्रियाः । व्य० प्र० ५ आ ।

विगलिंदियता-विकलानि रोगादिभिरुपहतानीन्द्रियाणि येषां तद्भावो विकलेन्द्रियता । उत्त० ३३७ ।

विगलिंदिया-विकलेन्द्रिया-अपञ्चेन्द्रिया । ठाणा० १०७ । हत्थपायाईहिं छिण्णा उद्दिय ण णयणाय । दश० चू० १३५ ।

विगलि-अरण्यम् । मर० ।

विगलितेंदिअ-विगलितेन्द्रियः-अपनीतनासिकादीन्द्रियः, पारदारिकादिः । दश० २४८ ।

विगहा-विकथा: परविस्मापकविविधोल्लापरूपा । उत्त० ७१० । विकथा । आव० १०२ ।

विगिंच-वेविक्ष्व-पृथक्कुरु त्यज । आचा० १२७ । त्यजापनय पृथक्कुरु । आव० १६० । विगिञ्च-वेविग्धि पृथक्कुरु । उत्त० १८६ ।

विगिंचइ-त्यजति । ओघ० ५३ ।

विगिंचए-परित्यज्यते । ओघ० १९६ ।

विगिंचण-विगिञ्चनं-परित्यागः । ओघ० ४८ । परिष्ठापनम् । ओघ० १६५ । परिष्ठापनम् । बृ० द्वि० ९४ आ । त्यागः । आव० ६२८ ।

विगिंचणया-विवेचनिकः-परिष्ठापनिका । बृ० प्र० ८० आ ।

विगिंचणा-विवेकः । आव० ६४१ ।

विगिंचतु-विवेचयतु । आव० ८५७ ।

विगिंचन-सर्वपरिष्ठापनं परिष्ठापनस्पर्शनधावनानां सकृत्करणं वा । बृ० तृ० १८३ अ ।

विगिंचमाण-विवेचयन्-सर्वं परिष्ठापयतु । ठाणा० ३२६ ।

विगिंचिअव्व-विगिञ्चितव्यं-परित्याज्यम् । दश० ३१ ।

विगिंचिउं-परिष्ठापनार्थम् । ओघ० १९७ ।

विगिंचिउणं-परित्याज्य । पिण्ड० ६५ ।

विगिंचिज्जइ-त्यज्यते । आव० ६४० ।

विगिंचिय-परित्यक्तः । व्य० प्र० २१० अ ।

विगिंचेज्जा-विभागेन विभजेत्-निष्कासयेत् । ओघ० १६६ ।

विगिट्ठ-अष्टवर्षपर्यायः । व्य० प्र० २४० । विंशतिवर्षाणि । व्य० प्र० २४१ । पञ्चानां वर्षाणामुपरिपर्यायः विकृष्टः । व्य० द्वि० ४५४ अ । विकृष्टम् । ओघ० ८८ ।

विगिट्ठतव-विकृष्टतपः-षष्ठमादारभ्य जायते तद् । ओघ० १६१ ।

विगिट्ठा-विकृष्टा-नगर्या दूरवर्तिनी बहिर्वर्तिनी । राज० २ ।

विगिन्न-विकीर्णः-व्याप्तम् । प्रज्ञा० ८७ ।

विगीतगोत्र-अनगारः । सूयं० ४ ।

विगुत्ता-निर्लज्जः । नि० चू० प्र० ११० आ ।

विगुव्विया-विकुर्विता-वस्त्राद्यलङ्कृता । बृ० द्वि० ६ आ ।

विगुव्वणा-विकुर्वणा-वैक्रियकरम् । ठाणा० ३५६ ।

विगोविओ-विगोपितः-लघूकृतः । आव० ७०३ ।

विगोवित-विकोविदो-विशेषेण साधुसामाचारीकुशलः । बृ० द्वि० १९४ आ ।

विग्गह-विग्रहः-वक्रम् । भग० ८५ । विग्रहः आकृतिः । भग० १४५ । विग्रहः-शरीरं, आकारः । भग० २४९ । विग्रहः-वक्रं लघुं सङ्क्षिप्तम् । भग० ६१६ । विग्रहः । आव० १०२ । विग्रहं-कलहम् । विशे० ६३३ । विग्रहः वक्रगमनः । ठाणा० १७७ । विग्रहे-वक्रगतौ च तस्य सम्भवाद् गतिरेव विग्रहः, विशिष्टो वा ग्रहो-विशिष्टस्थानप्राप्तिहेतुभूता गतिर्विग्रहः । भग० ६५६ । विग्रहः-क्रमैरिव गन्तव्यक्षेत्रातिक्रमरूपः । ज० प्र० ४०२ ।

विग्गहकंडए-विग्रहो-वक्रं कण्डकं-अवयवो विग्रहरूपं विग्रहकण्डकं ब्रह्मलोककूर्प्परः । भग० ६१६ ।

विग्गहगइ-विग्रहगतिः वक्रगतिर्यदा विश्रेणि व्यवस्थितमुत्पत्तिस्थानं गन्तव्यं भवति तदा । ठाणा० ५६ । वक्रा तत् प्रधाना गतिः विग्रहगतिः । भग० ९५ : विग्रहगतिः-गतिभेदः । भग० २८७ ।

विग्गहगय-विग्रहगतः । विशे० २४४ ।
विग्गहाति- । ठाणा० ८६ ।
विग्गहिय-वैग्रहिकः शरीरानुरूपः । प्रश्न० ८३ ।
विग्गहिया-विग्रहिता-मुष्टिग्राह्या । जीवा० २७७ ।
विग्घ-व्याघ्रः-नाखरविशेषः । प्रश्न० ७ ।
विग्घमडे-व्याघ्रमृतः । जीवा० १०६ ।
विग्घय-वैयाघ्रः-व्याघ्रापत्यम् । प्रश्न० २१ ।
विग्घिय-वृहितः । वृ० तृ० ६५ अ ।
विग्रह-अवग्रहः । तत्वा० २,२८ । विशेषेण गृह्यतेऽने-नाष्टप्रकारं कर्म्म । (?) । विग्रहः । नंदी० १०४ । विग्रहः-शरीरम् । आव० २४० ।
विघाओ-विघातः गुणानां, अब्रह्मणस्त्रयोदशमं नाम । प्रश्न० ६६ ।
विघाटयति-विघात्य । जीवा० २५४ ।
विघरा-विगृहा । आव० २६२ ।
विघुट्टं-विघष्टं-विरूपघोषकरणम् । प्रश्न० ४६ ।
विघुट्टपणिल्लणं-विघुष्टानां एते पापाः प्राप्नुवन्ति स्वकृतं पापफलमित्यादि वाग्भिः संशब्दितानां, प्रणयनं वध्यभूमिप्रापणं विघुष्टप्रणयनम् । प्रश्न० १७ ।
विघ्नविद्रावण-मङ्गलं-शान्तिः । विशे० २२ ।
विघ्नविनायकः- । विशे० २ ।
विघ्नाः-राक्षसभेदविशेषः । प्रज्ञा० ७० ।
विचकिल-माल्ययोगविशेषः । आचा० ६१ ।
विचञ्ची-विचर्चिका-विपादिका । वृ० द्वि० १०१ अ ।
विचय-निर्णयः । ठाणा० ४९१ ।
विचरण-अर्थाद् अर्थान्तरे व्यञ्जनाद्व्यञ्जनान्तरे तथा मनःप्रभृतीनां योगानामन्यतरस्मादन्यतरांस्मानिति विचारः । ठाणा० १९१ ।
विचरित-[illegible] प्रवृत्तः । जीवा० १२३ ।
विचर्चिका-[illegible] । आचा० २३५ । [illegible] । प्रश्न० ४१ । [illegible] । प्रश्न० १६१ ।
विचार-विचारः अवकाशः । राज० ११६ ।
विचारभूमि-विचारभूमी-पुरीषोत्सर्गभूमिः । वृ० द्वि० १८ । विचारभूमि-[illegible]भूमिः । आव० ७६५ ।
विचारभूमी- । विशे० ११६ ।
विचारित-परिभावितः । नंदी० ११९ ।
विचाल-अन्तरालः । जं० प्र० १८२ ।
विचिंतिय-विचिन्तितं कृतम् । उत्त० ३८४ ।
विचिकित्सा-चित्तविप्लुतिः । आचा० २२१ । विचिकित्सा-शङ्का । आचा० २२३ । विचिकित्सा-मिथ्यादुष्कृतम् । आव० ७६५ ।
विचिकित्सित-फलं प्रति शङ्कोपेतः । ठाणा० १७६ । फलं प्रति शङ्कमानः । ठाणा० २४७ ।
विचिकिल-मल्लिका । जं० प्र० २६५ । मल्लिका । जं० प्र० ५२८ ।
विचित्त-वेणुदालेर्द्वितीयो लोकपालः । ठाणा० १९७ । चतुरिन्द्रियजीवविशेषः । उत्त० ६९६ । विचित्रः-विचित्रवर्णोपेतः । जीवा० २६७ । विचित्रः-विचित्रकूटः पर्वतविशेषः । प्रश्न० ९६ । विचित्रं आलेख्यः । जीवा० १९९ । विचित्रकूटः । भग० ६५४ । वत्थुत्तं पन्नवेंतो वि एस गुज्झमाणं । नि० चू० द्वि० २५ अ । नानावर्णः । नि० चू० प्र० २२९ अ । विदीप्तं-विचित्रम् । उपा० २९ । दोहिं विहिं वासच्छेहिं । नि० चू० प्र० २५३ अ ।
विचित्तकूड-विचित्रकूटपर्वतः । जं० प्र० (?) ।
विचित्तणेवत्थ-विचित्रनेपथ्यः । आव० ३५८ ।
विचित्तपक्ख-वेनुदेवस्य चतुर्थो लोकपालः । ठाणा० १९७ । विचित्तपक्खो-विचित्रपक्षः चतुरिन्द्रियजन्तुविशेषः । जीवा० ३२ । विचित्रपक्षः चतुरिन्द्रियविशेषः । प्रज्ञा० ४२ ।
विचित्रवट्टक-भाजनविधिविशेषः । जीवा० २६६ ।
विचित्तमाला-विचित्रमाला-कुसुमस्रक् । भग० १३२ ।
विचित्तवत्थाभरण-विचित्राणि वस्त्राणि आभरणानि च यस्य वस्त्राण्येव वाऽऽभरणानि-भूषणानि अवस्थाभरणानि-अवस्थोचितानीत्यर्थो यस्य स तथा । ठाणा० ४१८ ।
विचित्तवीणा-वाद्यविशेषः । ज्ञाता० २२९ ।
विचित्ता-विचित्रा-[illegible] दिक्कुमारी । जं० प्र० ३८३ । विचित्रा-विचित्रा [illegible] । [illegible] १३६ । विचित्रा-[illegible] दिक्कुमारी । आव० १२२ । [illegible] । नि० चू० तृ० ४० अ ।
विचित्ताउसणंकिण्ण-[illegible]

अवसन्तकोर्णोऽवसन्नव्यापृः । व्य० द्वि ११ आ ।

**विचित्रकूट-** । ठाणा० ७४ । ठाणा० ३२६ ।

**विचित्रसूत्रता-**स्वपरसमयविविधोत्सर्गापवादादिवेदिता । उत्त० ३९ ।

**विच्च-**मध्यम् । बृ० तृ० १४८ अ । ओघ० १८२ ।

**विच्चा-** । नि० चू० प्र० १६१ अ ।

**विच्चामेलणा-**(देशीभाषा) मरहट्टविसये चोटि । नि० चू० प्र० २६४ आ ।

**विच्चामेलिय-**पदवाक्यावयवरूपा बहवः पल्लवास्तैर्विमिश्रं व्यत्याम्रेडितम्, अथवा अस्थानच्छिन्नग्रथितं व्यत्याम्रेडितम् विशे० ४०६ । व्यत्याम्रेडितं-यदस्थानेन पट्टघटनम् । बृ० प्र० ४६ अ ।

**विच्छए-**विक्षितः विविधं-अनेकप्रकारेण कूटपाशादिना क्षतः-परवशीकृतः, श्रमं वा ग्राहितः । सूत्र० ७२ ।

**विच्छड्डइत्ता-**विच्छर्दयित्वा-भावतः परित्यज्य । राज० १२२ ।

**विच्छड्डिय-**विच्छर्दितः-त्यक्तः । राज० १४६ । विछर्दितः-त्यक्तः । ज० प्र० २३२ । विच्छर्दितं-विविध-मुज्झितं बहुलोकभोजनत उच्छिष्टावशेषसम्भवात् विच्छ-र्दितं वा विविधविच्छित्तिमत् । भग० १३५ ।

**विच्छर्दित-**परिशाटितम् । प्रश्न० १५४ ।

**विच्छवि-**विच्छविः-विगतच्छायः । जीवा० ११४ ।

**विच्छाणो-**वल्लीविशेषः । प्रज्ञा० ३२ ।

**विच्छिदणं-**बहुबार सुट्ठु वा छिदणं । नि० चू० प्र० १८९ अ ।

**विच्छिदेज्जा-**विच्छिन्द्याद्-विविधप्रकारैश्छेदं कुर्याद् । उपा० ४१ ।

**विच्छिए-**वृश्चिकः-चतुरिन्द्रियभेदः । उत्त० ६९६ ।

**विच्छित्ति-**भक्तिः । जीवा० ३७९ ।

**विच्छिनत्ति-**विच्छिन्न करोति दूरे व्यवस्थापतीत्यर्थः । ठाणा० ३०५ ।

**विच्छिन्न** विस्तीर्णं उद्धर्वाधोपेक्षया । जीवा० २७१ ।

**विच्छिन्न**[illegible]-वष्टम्भतः । भग० ६०५ ।

**विच्छिन्नसंसारवेयणिज्ज-**व्युच्छिन्नचतुर्गतिगमनवेद्यकर्म [illegible] । भग० ११[illegible] ।

**विच्छिन्नाधिः-** । प्रज्ञा० ५४२ ।

**विच्छिप्पमाण-**विशेषेण स्पृश्यमानः । भग० ४८२ ।

**विच्छुओ-**-वृश्चिकः । आव० ४१७ ।

**विच्छुभ-**विक्षिप निष्काशय । प्रश्न० २० ।

**विच्छुय-**वृश्चिकः-चतुरिन्द्रियजन्तुविशेषः । जीवा० ३२ । वृश्चिकः-वृश्चिकप्रधाना विद्या । आव० ३१८ ।

**विच्छुयडङ्क-**वृश्चिकडङ्कः-वृश्चिककण्टकः । प्रश्न० १६ । वृश्चिककण्टकः । ज्ञाता० २०४ ।

**विच्छुयलंगोलसंठिए-**वृश्चिकलाङ्गूलसंस्थितं-मूलनक्षत्र-स्थानम् । सूर्य० १३० ।

**विच्छुरित-**कनकखचितम् । जीवा० २२३ । खचितम् । ज० प्र० २७५ ।

**विच्छेद-**विविधप्रकारो वा च्छेदः । नि०चू०प्र० २५६आ ।

**विजए-**नमिनाथपिता । सम० १५१ । तृतीयचक्रीपिता । सम० १५२ । एकादशमचक्रीपिता । सम० १५२ । आगामीन्यामुत्सर्पिण्यां तीर्थकृत् । सम० १५४ । बलदेव-वासुदेवपूर्वभवनाम । सम० १५४ । विजयः-मृगग्रामनगरे क्षत्रियो राजा । विपा० ३५ । विजयः-शालाटव्यां चोरप-ल्यां चोरसेनापतिः । विपा० ५६ । विजयः-जय एव विशिष्ट तरः प्रचण्डप्रतिपन्थ्यादिविषयः । औप० २४ । विजयः-परे-षामसहमानानामभिभवोत्वादः । जीवा० २४३ । विजयः-अभ्युदयः । प्रज्ञा० ९९ । विजयः-सप्तदशममुहूर्तनाम । सूर्य० १४६ । विजयः-समृद्धिः । ठाणा० ४९१ । विजयः-अभ्युदयः । सूर्य० २६३ । जम्बूद्वीपस्य द्वारम् । ज० प्र० ४७ । विजयः-लोकोत्तरीयतृतीयमासनाम । ज० प्र० ४९० । विजयः-मुहूर्तनाम । जं० प्र० ४९ । ऊर्द्धलोके बादरपृथ्वीकायस्थानम् । प्रज्ञा० ७१ । विजयः-द्वितीयो बलदेवः । आव० १५९ । विजयः-अनन्तजिन-प्रथमभिक्षादाता । आव० १४७ । विजयः-नमिपिता । आव० १६१ । विजयः-जयचक्रिपिता । आव० १६२ । राजगृहे तस्करः । ज्ञाता० ७९ । विजयः-अभिभवो-त्पादः । राज० २३ । सिंहगुफायां चोरसेनापती । ज्ञाता० २३६ । विचीयते-निर्णीयत । ठाणा० १९० । विजयः-द्वितीयो बलदेवः । सम० ८४ । विजयः-पृथिवीसाधनव्यापारः । सम० ९५ ।

विजओ-विजयः-चन्द्रसूर्ययोगादिविषयो निर्णयः । सूर्य० ९ । विजयः-अभ्युदयः । वैजयन्तीनां पार्श्वकर्णिका । जीवा० १७५ । विजयः-अभ्युदयः । जीवा० ३७९ । विजयः-लवालवोदाहरणे आचार्यशिष्यः । आव० ७२१ । विजयो-त्रिंशतो मुहूर्तानां मध्ये मूहूर्त्तः । ज्ञाता० १२३ ।

विजढ-परित्यक्तः । जीवा० ९७ । रहितः । व्य० प्र० ९७ अ । परित्यक्तः । बृ० तृ० ४७ अ । परित्यक्तः । ओघ० १०३ ।

विजणा-जनसम्पातरहितः । बृ० तृ० १६९ अ ।

विजत-विजय.-समृद्धिः । ठाणा० ४९१ ।

विजयंता-वैजयन्ती-अष्टमा रात्री । सूर्य० १४७ ।

विजय-अभ्युदयस्तत्संसूचिका वैजयन्त्यभिधाना या पताका । वैजयन्तीनां पार्श्वकर्णिका । जीवा० १६५ । श्रात्रो-पतृतीयमासनाम । सूर्य० १५३ । गाथापतिविशेषः । भग० ६६२ । विजयः-पोलाशपुराधिपतिः । अन्त० २३ । जम्बूद्वीपविजयद्वाराधिपदेवः । ज० प्र० २७३ । जम्बूद्वीपे प्रथमं द्वारम् । सम० ८८ । विजयः- अभ्युदयः । जीवा० २०९ । अभ्युदयः । ज० प्र० ५४ । विजयो नाम सर्वकार्यप्रसाधको योगः । ज० प्र० २७४ । अभ्युदयः । राज० ६९ । जम्बूद्वीपस्य प्रथमं द्वारम् । ठाणा० २२५ । अनन्तनाथप्रथमभिक्षादाता । सम० १५१ । विचयः-निर्णयः । भग० ९२६ । विचीयते मृग्यते विचयः । सूत्र० ३१८ । चक्रवर्तिविजेतव्यः क्षेत्रखण्डः । ज्ञाता० १२१ । गन्धहस्तिविशेषः । ज्ञाता० १०१ । तालोद्घाटिन्यवस्वापिन्यादिभिरूपेतः चोरः । व्य० प्र २४० अ । चौरविशेषः । व्य० प्र० २४, विजयः-चोरः । व्य० प्र० २९५ आ ।

विजयघोस-विजयघोषः-ब्रह्मगुणनिरूपेण जयघोषविप्रभ्राता । उत्त० ५२० ।

विजयचोर-माकन्दीज्ञातो चोरः । ज्ञाता० १५९ ।

विजयढक्का-यस्याः शब्दः समस्तनगरव्यापी समस्तस्कन्धावारव्यापी च स । प्रज्ञा० ३०० ।

विजयते-विजयकः-पुण्डरीकिण्यां कोऽपि राजकुमारः । विपा ९४ ।

विजयदसमो-ज्ञाताधर्मकपाटीकायाः पूर्णता दर्शका तीथिः । ज्ञाता० २५४ ।

विजयदानगुरु-आनन्दविमलसूरिपट्टभूषणः । ज० प्र० ५४३ ।

विजयदूस-विजयदूष्यं-वितानकरूपं वस्त्रम् । ठाणा० २३२ । विजयदूष्यं-वस्त्रविशेषः । जीवा० २१० । विजयदूष्यं वितानकरूपो वस्त्रविशेषः । ज० प्र० ५५ । विजयदूष्यं-वस्त्रविशेषः । राज० ३८ ।

विजयदेवसूरि-विजयसेनसूरिपट्टयुवराजः । ज० प्र० ५४५ ।

विजयदेवा-मण्डिकमौर्यपुत्रमाता । आव० २५५ ।

विजयद्वार-जम्बूद्वीपसम्बन्धितः । पूर्वदिग्व्यवस्थितः द्वारः । सम० १६ । ठाणा० ७४ ।

विजयपुर-कनकरथराजधानी । विपा० ७५ । नगरं वासवदत्तराजधानी । विपा० ९५ । सुमतेः प्रथमपारणकस्थानम् । आव० १४६ । पद्मावतीविजये राजधानी । ज० प्र० ३५७ । ठाणा० ८० ।

विजयमित्त-विजयमित्रः-वणिग्ग्रामे सार्थवाहः । विपा० ४६ । विजयमित्रः-वर्द्धमानपुरे नृपतिः । विपा० ८८ । विजयमित्रः-वणिग्ग्रामे सार्थवाहः । विपा० ५१ ।

विजयवद्धमाण-विजयवर्द्धमानः-शतद्वारनगरे खेटविशेषः । विपा० ३९ । विजयवर्द्धमानः-वर्द्धमानपुरे उद्यानम् । विपा० ८८ ।

विजयविजइय-विजयवैजयिको-अतिशयेन विजयो विजयविजयः स प्रयोजनं यस्यां सा । ज० प्र० १९४ ।

विजयवेजइय-अतिशयेन विजयो विजयविजयः स प्रयोजनं यस्याः सा विजयवैजयिकी । भग० ५४५ ।

विजयवेजयंति-विजयवैजयन्ती-पताकाविशेषः । सूर्य० २६१ ।

विजयवेजयंती-विजयः-अभ्युदयस्तत्संसूचका वैजयन्त्यभिधाना या पताकाः, अथवा विजय इति वैजयन्तीनां पार्श्वकर्णिका उच्यन्ते तत्प्रधाना वैजयन्त्यो विजयवैजयन्तो पताका । जीवा० १७१ । विजयवैजयन्ती-विजयः अभ्युदयस्तत्सूचिका वैजयन्त्यभिधाना पताका विजयः-वैजयन्त्या विजया वैजयन्तीनां पार्श्वकर्णिका पताका एव प्रधाना वैजयन्ती विजयवैजयन्ती । जीवा० २३९ । पताका । ज० प्र० ५४ ।

**विजयसेनसूरि**-हीरविजयसूरिपट्टधरः । जं० प्र० ५४४।

**विजया**-इङ्गालमहाग्रहस्य प्रथमाऽग्रमहिषी ।ठाणा० २०४। अञ्जनकपर्वते पुष्करणी । ठाणा० २३१। पद्मप्रभोर्शिबिका । सम० १५१ । पञ्चमनक्रीणो स्त्रीरत्नम् । सम० १५२ । खाद्यविशेषः । जीवा० २७८ । उत्तरदिग्भागाञ्जनपर्वतस्य पूर्वस्यां पुष्करिणी । जीवा० ३६४। वैजयन्तीनां पार्श्वकर्णिका । जीवा० ३७९ । अनुत्तरोपपातिके एकभेदः । प्रज्ञा० ६९ । वैजयन्तीना पार्श्वकर्णिका । जं० प्र० ५४ । वप्रविजये राजधानी । जं० प्र० ३५७। पौरस्त्यरुचकवास्तव्या पञ्चमा दिक्कुमारी । जं० प्र० ३९२ । रात्रेर्नाम । जं० प्र० ४९१ । गाथापतिनामप्रमहिषी । जं० प्र० ५३२ । सप्तमी रात्री । सूर्य० १४७। वैजयन्तीनां पार्श्वकर्णिका । सूर्य० २६३ । पूर्वादिग्रुचकवास्तव्या दिक्कुमारी । आव० १२२ । पार्श्वान्तेवासिनी प्रव्राजिका । आव० २०७ । औषधिविशेषः उत्त० ४९० । विजयपर्वता प्रमाणाङ्गुलप्रमेया । अनु० १७१ । पञ्चमबलदेवमाता । सम० १५२। इङ्गालस्य प्रथमाऽग्रमहिषी । भग० ५०५। वैजयन्तीनां पार्श्वकर्णिका । जीवा० २०९ । विजया-अजितमाता। आव०१६० । विजया-सुदर्शनबलदेवमाता । आव० १६२ । विजयः आश्रयः। दश० २०४ । औषधिविशेषः । उत्त० ४९० । वैजयन्तीनां पार्श्वकर्णिका । राज० ६९ ।

**विजयाइ**-खाद्यविशेषः । जं० प्र० ११८ ।

**विजयंती**- । ठाणा० ८० ।

**विजयेण**-विजयेनः-परेषामसहमानानामभिभावकत्वरूपेण । जं० प्र० १८७ ।

**विजल**-विगयं जलं जत्थ विज्जलो । दश० चू० ७४।

**विजहणा**-विहानं-परित्यागः । ठाणा० १४० ।

**विजिओ**-विजितः-पराजितः । आचा० ८४ ।

**विजितसमर**-आधाप्रतिश्रवणदृष्टान्ते गुणसमृद्धनगरे महाबलराज्ञो जेष्ठकुमारः । पिण्ड० ४७ ।

**विजोयते**-अधिगमद्वारेण परिचता क्रियते । ठाणा० १९०।

**विज्जंपिल**-बीजविद । पउ० ११-३६ ।

**विज्ज** वैद्यः-वैद्यशास्त्रे चिकित्सायां च कुशलः । विपा० ४० । वेदः-आगमो-लौकिकलोकोत्तरिककुप्रावचनिकभेदभिन्नः । राज० ११८, ११९ ।

**विज्जई**-विद्यते पठ्यते । दश० ४० ।

**विज्जए**-विद्यते । दश० १२५ ।

**विज्जुकुमारा**-विद्युत्कुमाराः, भोमस्याजोपरातत्रयतनिर्दिष्टवर्तिना देवाः । भग० १९५ ।

**विज्जुगुत्राय**-दशमं पूर्वम् । ठाणा० १९९ ।

**विज्जपुत्त**-वैद्यपुत्रः-वैद्यशास्त्रचिकित्साकुशलस्य पुत्रः । विपा० ४० ।

**विज्जय**-वैद्यकम् । औप० १९८ ।

**विज्जल**-कर्दमः । आचा० ३३८ । पिच्छलम् । आचा० ४११ । कर्दमः। आव० २७४ । विजलः-विगतजलः-कर्दमः। दश० १६४। सिढिलकर्दमो। नि० चू० प्र० ११२ अ । जदणविलिप्पिलं। नि० चू० द्वि० १२९ अ । विजलं-स्निग्धकर्दमाविलस्थानम्। जं० प्र० १२४ । विगतं जलं । नि० चू० प्र० ११४ अ । कर्दमाकुलम् । बृ० तृ० ७१ अ । पंकिलम् । बृ० प्र० १४८ अ ।

**विज्जा**-विद्या-तत्त्वपरिच्छेदिनी । आचा० १५९ । विद्याश्रुतम् । भग० ७९४ । विदन्त्यनया तत्त्वमिति विद्या विविधमन्त्रात्मिका । उत्त० २६७ । वेदनं विद्या-तत्त्वज्ञानात्मिका । उत्त० २६२। विद्या-सच्छास्त्रात्मिका । उत्त० १६२। विद्यतेऽनया तत्त्वमिति विद्या-श्रुतज्ञानम्। उत्त० ४४२ । विद्या-प्रज्ञप्त्यादिदेवताधिष्ठिता वर्णानुपूर्वी । ज्ञाता० ७ । विद्या-प्रज्ञप्त्यादिका । प्रश्न० ११६ । विद्या-प्रज्ञप्त्यादिका । औप० ३३ । विद्या, यत्र मन्त्रे देवता स्त्री सा विद्या ससाधना। आव०४११ । विद्या-ज्ञानं अत्यन्तापकारिभावतमोभेदकम् । दश० ११० । विद्या-स्त्रीरूपदेवताधिष्ठिता, ससाधनावाऽक्षरविशेषपद्धतिः । पिण्ड०१२१। लेहादियासउणरूयपज्जवसाणा बावत्तरिकला तो विज्जा. इत्थिपुरिसाभिहाणा विज्जामंता, ससाहणा विज्जा । नि०चू०द्वि० ४४ अ । विद्या-सम्यक्शास्त्रावगमरूपा । उत्त० ३४४ । ससाधना स्त्रीरूपदेवताधिष्ठिता वाऽक्षरपद्धतिर्वा विद्या । पिण्ड० १४१ । विदित्वा । उत्त० ३३७। विद्वान्-जानन् । उत्त० ४४६ ।

**विज्जाअणुप्पवाय**-यत्रानेकविधा विद्यातिशया वर्ण्यन्ते

